

International Journal of Sanskrit Research

अनन्ता

ISSN: 2394-7519
IJSR 2024; 10(1): 07-09

www.anantaajournal.com
Received: 05-11-2023
Accepted: 07-12-2023

**सुभद्रा मणिः वारिक्**
शोधछात्रा,
महाराजाश्रीरामचन्द्रभञ्जदेओ विश्वविद्यालयः, वारिपदा, ओडिशा, भारत

**Corresponding Author:**
**सुभद्रा मणिः वारिक्**
शोधछात्रा,
महाराजाश्रीरामचन्द्रभञ्जदेओ विश्वविद्यालयः, वारिपदा, ओडिशा, भारत

# संस्कृतसाहित्यविकाशधारायां क्षेमेन्द्रस्य काव्यकलानैपुण्यम्

## सुभद्रा मणिः वारिक्

**सारांश**
संस्कृतभाषायां यथा सर्वेषां मनुष्याणां जीवनचरितं मानवसभ्यतायाः संस्कृतेश्च तथ्यं सकलं निहितमस्ति।तथैव प्रतिदिनं जन्मादारभ्य मरणं यावत् गर्भाधानजातसंस्कारादिकं मरणावस्थायामपि शौचसंस्कारादि कर्माणि जीवनयात्रायां यानि प्रयोजनीय तथ्यानि सन्ति तानि सर्वाणि संस्कृतभाषायां विलसन्तीति । प्रायसः पञ्चसहस्रवर्षेभ्यः पुरा वेद – वेदाङ्ग – काव्य – पुराण – प्रभृतिभिः संस्कृतभाषा विश्वस्य गौरवमयं महत्वं निर्वहन्ती प्रकामं विद्योतते । तत्र वैदिकसाहित्यस्य गौरवोपरि चेत् द्रुग्पातः विधीयते । तर्हि एतद् वक्तुं शक्यते यत् संस्कृते साहित्यस्वरुपं वैदिकवाङ्कमयमहत्वपुर्णसंहिता - व्राह्मण - आरण्यक - उपनिषद्प्रभृतिभिः तथा शिक्षा - कल्प - छन्द - निरूक्त - ज्योतिषषडङ्गैः वर्द्धितं सुसमृद्धं संस्कृतम् । तत्र वाल्मीकिरामायणे निगदितम् –

यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना मां सीता भीता भविष्यति ।। १।।

अत्र लक्ष्यते - हनुमान् स्वमनसि जल्पति यत् चेदहं द्विजातिवत् साधुसंस्कृतं ब्रुयां तर्हि सीता मां रावणं मत्वा विभियात् ।
संस्कृतभाषायाः गौरवं विश्वेप्रतिष्ठापयितुं वहवः प्रयासः सम्प्रतिः संलक्ष्यन्ते।
संस्कृतसाहित्यप्रामुख्येन द्विधा विभज्यते। यथा – वैदिकभागः काव्यभागश्च ।
पाश्चात् विदुषां मध्ये माक्समुलर् History of anniciant sanskrit literature.

प्राचीनसंस्कृतसाहित्यस्य इतिहास इति ग्रन्थं रचितवान् यत्र तु संस्कृतभाषायाः
पुर्णाङ्गस्वरूपं नैव लिपिवद्धमपितु वैदिकसाहित्यसम्वन्धे सविशेषतथ्यमुपाश्रितम् ।

**कूटशब्दाः** साहित्यम्, रामायणम्, काव्यसौन्दर्यम्

## प्रस्तावना
**रामायणभेदाः** संस्कृतसाहित्ये रामायणमादिमहाकाव्यरूपेण सुविख्यातम् । यस्य महाकाव्यस्य प्रारम्भः महर्षिवाल्मीकिः शोकसन्तप्तहृदयनिसृतभावप्रवणवाक्विलासेन संजात इति। यथा -

मां निषाद प्रतिष्ठा त्वमागमः शाश्वतीः समाः ।

यत्क्रौचमिथुनादेकमवधीः काममोहितम् ।।२।।

वाल्मीकिरामायणे चतुर्विंशतिसहस्रश्लोकाः सन्ति । तथाच सप्तकाण्डानि विद्यन्ते ।

यथा – १.वालकाण्डम्, २.अयोध्याकाण्डम्, ३.अरण्यकाण्डम्, ४. किष्किन्धाकाणडम्
५. सुन्दरकाण्डम्, ६.लङ्काकाण्डम्, ७. उत्तरकाण्डम् ।

रामायणस्य रचनाकालः ख्री.पू.पञ्चमशताब्दी मन्यते । तत्र बौद्धसाहित्यस्य तथा
जैनसाहित्यस्य अनुशीलनात् समीक्षकैरुक्तं यत् रामायणस्य रचना
बौद्धसाहित्यरचनातः पूर्वं नाम पञ्चमशताब्दी इति वक्तुं शक्यते । रामायणस्य रचना
पाणिनेः पूर्वमिति वक्तुं शक्यते । यतः लौकिकसंस्कृतं नियमयितुं पाणिनिना
अष्टाध्यायी प्रणिता । यदा पाणिनेः समयः ख्री.पू. चतुर्थशतकम् परन्तु रामायणस्य
समयः पञ्चमशताब्दीत्वात् रामायणं पाणिनिः पूर्ववर्त्ती इति । षडोषशताब्द्यां
तुलसीदास विरचितं तुलसीरामायणं वाल्मीकि रामायणमुपजीव्य रचयितमिति स्पष्टं प्रकटितम्।

नानापुराण निगमागमसम्मतं यत् ।
रामायणे निगदितं क्वचिदन्यतोऽपि।।
स्वान्तः सुखाय तुलसी रघुनाथगाथा ।
भाषानिवद्धमतिमञ्जुलमाततनोति ।।३।।

रामायणमाश्रित्य वहुसंख्यकटीकाः तथा अनेके रामायणग्रन्थाः विरचिताः । यथा -

१. योगवशिष्ठः
२. अध्यात्मरामायणम्
३. अद्भुतरामायणम्
४. आनन्दरामायणम्
५. तत्वसंग्रहरामायणम्
६. भूषुण्डिरामायणम्
७. मन्त्ररामायणम्
८. रामलिङ्गामृतम्
९. राघवोल्लासः
१०. उदात्तराघवः

वाल्मीकि प्रणीतरामायणं महाकाव्यरूपेण सर्वजनसुविदितं विद्यते । तत्र अलंकार – ध्वनि – रस – गुण – रितिप्रभृतिविभावैः काव्यमिदं विभूषितम्। तत्र प्रकृतिवर्णनाप्रसङ्गे कविना लिखितम् –

प्रकृत्या हिमकोणाढ्यो दूरसूर्याश्च सांप्रतम्।
यथार्थनामा सूव्यक्तं हिमवान् हिमवान् गिरिः।।
रविसंक्रान्तसौभाग्यः तुषारवृतमण्डलः।
निःश्वासान्धइवादर्शशचन्द्रमा न प्रकाशते ।।

**कथासाहित्ये रामकथा**

कथासाहित्येगुणाढ्यवृहत्कथा,बधस्वामीकृतवृहत्कथाश्लोकसंग्रहः,आचार्यक्षेमेन्द्रस्य
वृहत्कथामञ्जरी संक्षिप्तः रामकथा वर्णिता दृश्यते ।सोमदेवकृतसाहित्यस्य
शिरमणिग्रन्थकथासरित्सागरः, वासुदेवहिण्डि पञ्चविंशशताब्दी एकवृहत्कथा वा
एकप्राकृतसस्करणरामकथा वर्णना दृश्यते ।

**आधुनिकः भारतीयभाषासु रामकथाः**

| रचयिता | ग्रन्थः | समयः | भाषा |
|---|---|---|---|
| कंब | कंबरामायण | १२शताब्दी | तामिल।१। |
| रंगनाथ | रंगनाथरामायण | १३शताब्दी | तेलगु |
| भास्कर | भास्कररामायण | १४शताब्दी | तेलगु |
| राम | रामचरित | १४शताब्दी | मालायलम् |
| पुनमनंपूतिरि | रासायणचम्पू | १५शताब्दी | मालायलम् |
| अय्यिपिप्लै | रामकथापाटु | | मालायलम |
| कविराजमार्ग | रामायण | ८५०शतक | कन्नड |
| नृपतुङ्ग | भूवनैक्यरामाभ्युदय | ८५०शतक | कन्नड |
| नागचन्द्र | पम्परामायण | ११००-१२०० | कन्नड |
| हरिदास | मूलवालरामायण | १७५० | कन्नड |
| रामकृष्णराव | श्रीरामचरित्र | १८१६ | कन्नड |
| सारलादास | तुलसीरामायण | १५शताब्दी | ओडिआ |
| वलरामदास | जगमोहनरामायण | १६शताब्दी | ओडिआ |

| | | | |
|---|---|---|---|
| शिद्धेश्वरदास | विलङ्कारामायण | १७००शतक | ओडिआ |
| धनञ्जयभञ्ज | रघुनाथविलास | | ओडिआ |
| शंकरदास | वारमासीकोइलि | | ओडिआ |
| उपेन्द्रभञ्ज | रामलीलामृत | | ओडिआ |
| भूवनेश्वरकविचन्द्र | सीतेशविलास | | ओडिआ |
| ईश्वरदास | रामलीला | | ओडिआ |
| प्रकाशभट्ट | काश्मीरीरामायण | | ओडिआ |

संस्कृतसाहित्ये महाकाव्यानामुपरि विविधलक्षणं परिदृश्यते। तत्र भामहविरचितः
काव्यालङ्कारे, दण्डीकृतकाव्यादर्शे, अग्निपुराणे, रूद्रटविरचितकाव्यालङ्कारे, तथा
विश्वनाथविरचितसाहित्यर्दपणादिषु महाकाव्यस्य वर्णनात्मकलक्षणं प्रदतः।
महाकाव्यलक्षणे किमपि महत्वपूर्णं तथ्यमस्ति । तत्र कथानकं नायकः तथा
रसानावलम्ब्य लक्षणं विद्यते । कथानकं दृष्ट्या महाकाव्ये किमपि प्रसिद्धघटणा
तथा ऐतिहासिकघटणा व्यजते । ध्वन्यालोके आनन्दवर्द्धनेन अलङ्कारस्य निर्देशः
विहितः। यथा -

रसक्षिप्ततया यस्य वन्धः शक्यक्रियो भवेत् ।
अपृथग्यत्ननिर्वत्यः सोऽलङ्कारो ध्वनौ मतः।।४।।

अस्यायमभिप्रायः रसादि ध्वनिषु यस्य अलङ्कारस्य रचना रसद्वारा आक्षिप्तं न भृत्वा
प्रयत्नान्तरेण भवति । तदैव अलङ्कारमान्यः चेत् एतत् न जायते ।

**उपसंहारः**

संस्कृतसाहित्ये लक्ष्यशास्त्र – लक्षणशास्त्ररूपेण विभागद्वयं दृश्यते ।
लक्ष्यशास्त्ररूपेण वेद – वेदान्त – रामायण – महाभारत – भागवत – कालिदास – माघ-
भारवि – दण्डीप्रभृतिकविना काव्यशास्त्रं वुध्यते ।परन्तु नाट्यशास्त्राणि
मोनरञ्जकतया प्रतिपादितत्वात् लक्षणशास्त्रमुच्यते । काव्यमीमांसाकारराजशेखरस्य
मते –

उपकारकत्वादलंकारः सप्तमङ्गमिति यायावरीयः।
ऋते च तत् स्वरूपा परिज्ञानाद् वेदार्थावगतिः ।।

राजशेखरमते चतस्रः प्रसिद्धविद्याः यथा – तर्क-त्रयी-वार्ता-दण्डनीतिः । राजशेखरमते –

पञ्चमी साहित्यविद्या इति यायावरीयः
सा हि चतसृणामपि विद्यानां निस्यन्दः ।।५।।

आलंकारिकप्राधान्यदृष्ट्या वामनः कथयति –“ सौन्दर्यलङ्कारः;काव्यं ग्राह्यमलंकारात्”।
अलंकारशास्त्रस्य प्राचीनतादृष्ट्या राजशेखरेण उल्लिखितः ।यथा -
तत्र कविरहस्यं सहस्राक्षं,सामम्नासीत्, औक्तिकमुक्तिगर्भः, रीतिनिर्णयं, सुवर्णनाभः,
अनुप्रासिकं प्रचेतायनः यमकानि चित्रं चित्राङ्गदः, शब्दश्लेषं शेषः, वास्तवं पुलप्त्यः,
औपम्यमौपकायनः, अतिशयंपारशरः, अर्थश्लेषमुतत्थ्यः, उभयालंकारिकं कुवेरः,
वैनादिकं कामदेवः,रूपकानिरूपणीयं भरतः,रसाधिकारिकं नान्दिकेश्वरः, दोषाधिकारिकं धीषणः, गुणौपादानिकमुपमन्युः, औपनिषदिकं कुचुमार इति ।
मया यथामति निबन्धेऽस्मिन् क्षेमेन्द्रस्य काव्यकलानैपुर्ण्यं वर्णितं विद्यते यत्
विदूषां साहित्यपिपासूनां कृते महदुपकाराय भूयादिति आशासे ।

## सन्दर्भ

1. वाल्मीकिरामायणम्-५-३०
2. रामायणम्
3. तुलसीरामायणम्
4. ध्वन्यालोकः -२-१६
5. काव्यमीमांसा



International Journal of Sanskrit Research

अनन्ता

ISSN: 2394-7519
IJSR 2024; 10(1): 15-20

www.anantaajournal.com
Received: 11-11-2023
Accepted: 15-12-2023

**Dr. Pritiranjan Majhi**
Assistant Professor, Department of Sanskrit, F.M. University, Balasore, Odisha, India

**Corresponding Author:**
**Dr. Pritiranjan Majhi**
Assistant Professor, Department of Sanskrit, F.M. University, Balasore, Odisha, India

# अमरकोशोक्तवृक्षपर्यायाः- एकमध्ययनम्

**Dr. Pritiranjan Majhi**

**DOI:** https://doi.org/10.22271/23947519.2024.v10.i1a.2281

**सारांश**

उत्कृष्टपरम्परायाः समुन्नतसंस्कृत्याः भूमिरिति भारतवर्षः विश्वविदितः । राष्ट्रोऽयं शिक्षा-संस्कृति-ज्ञान-विज्ञान-अर्थनैतिक-सामाजिकादिक्षेत्रेषु अपि विश्वस्य अन्येषु भूभागेषु उन्नततरः आसीत् । भारतवर्षस्य सर्वोत्कृष्टा सम्पद् अस्ति संस्कृतवाङ्मयम् ।

भारतीयमतानुसारं शब्दार्थयोः सम्बन्धः नित्यः स्वाभाविकश्च । क्रियाभेदात् संस्कृतभाषायाम् एकस्य विषयस्य वाचकाः बहवः शब्दाः भवितुमर्हन्ति । ते शब्दाः पर्यायवाचिनः समार्थकशब्दाः वेति उच्यन्ते । संस्कृतकोशग्रन्थेषु एतादृशानां बहुशब्दानां संग्रहः प्राप्यते । तेषु कोशग्रन्थेषु महामान्य-अमरसिंहरचितः अमरकोशः अन्यतमः । तत्र 'भुवर्गादिकाण्डो' नाम द्वितीयकाण्डस्य वनौषधिवर्गे वृक्षशब्दस्य बहुपर्यायाः प्राप्यन्ते । यथा –

वृक्षो महीरुहः शाखी विटपी पादपस्तरुः ।
अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः ।।

आलोच्यमाणः संक्षिप्तः प्रबन्धोऽयम् अमरकोशस्यावलम्बनेन वृक्षस्य समार्थवाचकशब्दानाम् अर्थविवेचने तेषां यौक्तिकतापरीक्षायाञ्च प्रवृत्तः ।

**कूटशब्दः** वृक्षः, कोशः, पर्यायः, अमरकोशः, वाङ्मयम्, प्राचीनशास्त्रम्।

## प्रस्तावना

उत्कृष्टपरम्परायाः समुन्नतसंस्कृत्याः भूमिरिति भारतवर्षः विश्वविदितः। प्राचीन-ऐतिह्यावलोकनेन भारतबर्षस्य गौरवमय स्थितिः तथा भारतीयानां सुसंस्कृता जीवनधारा स्पष्टीयेते । पूतभूमेरस्याः पुण्यगाथा विस्मितीकरोति गवेषकान्। शिक्षा-संस्कृति-ज्ञान-विज्ञान-अर्थनैतिक-सामाजिकादिक्षेत्रेषु अपि भारतवर्षः विश्वस्य अन्येषु भूभागेषु उन्नततरः आसीत् । अतः अस्य स्वातन्त्र्यं वैदेशिकैरपि भज्यते।

सभ्यतायाः विवर्तनकारणात् भारतीयानां जीवनचर्यायामपि प्रभूतं परिवर्तनं जातम्, तथापि देशस्यास्य इतरभिन्नत्वमक्षुण्णं वर्तते । भारतवर्षस्य सर्वोत्कृष्टा सम्पद् अस्ति संस्कृतवाङ्मयम् । विश्वे भारतवर्षस्य काष्ठाप्रदर्शनाय अद्यापि संस्कृते पर्याप्तकारणानि अवशिष्टानि वर्तन्ते। संस्कृतवाङ्मयस्य परिधिः अपरिमेयः, अपरिसीमश्चास्य शब्दभाण्डारः। प्राचीनभारतीयविदुषां ज्ञानविज्ञानादिकं सर्वं गाच्छितमस्ति देवभाषायाः दिव्यभाण्डारे ।

शब्दार्थौ एव भाषायाः प्राणाधारौ । भाषा शब्दार्थौ अवलम्ब्य एव जगति प्रसारिता । वक्तुं पारयामः शब्दः भाषायाः आधारः अर्थश्च तस्याः चैतन्यम् । आधुनिकैः भाषावैज्ञानिकैः यत् मन्यते "भाषा वागवयवैरुच्चारिता यादृच्छिकध्वनिप्रतीकानां समष्टिः, नास्ति च शब्दार्थयोः कश्चित् स्वाभाविकसम्बन्धः" [1] -इति मतमिदं प्रातीनभारतीयचिन्ताधारायाः परिपन्थी । भारतीयमतानुसारं शब्दार्थयोः सम्बन्धः नित्यः स्वाभाविकश्च । व्याख्यातश्च वैयाकरणेन महाभाष्यकारेण – 'सिद्धे शब्दार्थसम्बन्धे' [2] इति वार्तिकमवतारयन् । नैयायिकैस्तु उच्यते शब्दार्थयोः सम्बन्धः ईश्वरकृतः नित्यः । यथोक्तं भाषापरिच्छेदकारेण मुक्तावल्यां – 'शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः, सा चास्मात्पदादयमर्थः बोधव्य इतीश्वरेच्छारुपा' [3] इति । प्रसङ्गेऽस्मिन् वाक्यपदीयस्य उक्तिः स्मरणीया-

आत्मरुपं यथा ज्ञाने ज्ञेयरुपं च दृश्यते
अर्थरुपं तथा शब्दे स्वरुपं च प्रकाशते ।।[4] इति ।

प्राचीनाचार्य-शाकटायनमतेन 'नामानि आख्यातजानि' इति । अर्थात् सर्वे शब्दाः क्रियानिष्ठाः। महाभाष्यकारेणापि मतमिदमविरुद्धम् । तेनोक्तम् – 'नाम च धातुजमाह निरुक्ते व्याकरणे शाकटस्य च तोकम्' [5] । यद्यपि कस्य शब्दस्य अर्थकरणे कस्याः आदिक्रियायाः अन्वयोऽभूदिति नास्ति निश्चयः तथापि कस्यापि क्रियाविशेषस्य अन्वयः शब्दार्थाभ्यां भवति, यस्मात् शब्दानाम् अर्थः निश्चीयन्ते इति मतम् । महर्षियास्केन बहुपूर्वमेव वैदिकशब्दानां निर्वचनसंवलितं निरुक्तं प्रणीतम्, यत्र शाकटायनस्य मतं स्वीकृत्य मूलधात्वनुसरणेन शब्दानाम् अर्थाः परीक्षिताः । क्रियाभेदात् संस्कृतभाषायाम् एकस्य विषयस्य वाचकाः बहवः शब्दाः भवितुमर्हन्ति । ते शब्दाः पर्यायवाचिनः समार्थकशब्दाः वेति उच्यन्ते । एवम् एकस्यैव शब्दस्य बहुपर्यावाचकाः शब्दाः संस्कृतभिन्नायां कस्यामापि भाषायां नास्ति । संस्कृतकोशग्रन्थेषु एतादृशानां बहुशब्दानां संग्रहः प्राप्यते । आलोच्यमाणः संक्षिप्तः प्रबन्धोऽयम् अमरकोशस्यावलम्बनेन वृक्षस्य समार्थवाचकशब्दानाम् अर्थविवेचने तेषां यौक्तिकतापरीक्षायाञ्च प्रवृत्तः ।

संस्कृतसाहित्ये पर्यायवाचीशब्दसमूहमाधारीकृत्य बहवः कोशग्रन्थाः रचिताः । तेषु महामान्य-अमरसिंहरचितः अमरकोशः अन्यतमः । नामलिङ्गानुशासनमिति अस्य नामान्तरम् । अस्मिन् कोशे प्रायः दशसहस्राणि नामानि प्राप्यन्ते यत् मेदिनीकोशे हलायुधकोशे संगृहीतशब्दानां परिमाणापेक्षया अधिकम् । अमरकोशस्य 'भुवर्गादिकाण्डो' नाम द्वितीयकाण्डस्य वनौषधिवर्गे वृक्षशब्दस्य बहुपर्यायाः प्राप्यन्ते । यथा –

वृक्षो महीरुहः शाखी विटपी पादपस्तरुः ।
अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः ।।[6]

अर्थात् महीरुहः शाखी विटपी पादपः तरुः अनोकहः कुटः सालः पलाशी द्रुः द्रुमः अगमश्चेत्येते वृक्षापर्यायाः ।
जीवसर्गः द्विविधः – तिष्ठतीती स्थावरो गच्छतीति जङ्गमश्च । अर्थात् गमनायोग्यः स्थावरः तथाः क्रियाशीलः जङ्गमः । पक्षान्तरे उत्पत्तिप्रक्रियाभेदेन स्थावरजङ्गमात्मके सृष्टावस्यां जरायुज-अण्डज-स्वेदज-उद्भिज्ज इति जीवः चतुर्विधः । तेषु तेषु उद्भिज्जान्तर्गतः स्थावरो वृक्षः प्रकृत्याः सर्वोत्कृष्ट उपादानः ।
वृक्ष एव जीवानां प्राणाधारः । आदिकालतः वृक्षः प्रत्यक्षतयाः परोक्षतया च जीवेन जीवनेन च सह संश्लिष्टः । भारतीयानां प्रकृतिनिर्भरजीवनचर्यायाः केन्द्रस्थल एव वृक्षः । नैषः केवलं मनुष्याणां किन्तु मनुष्येतराणाम् अपि जीवाधारोऽस्ति । अतः वृक्षं देवस्थाने संस्थाप्य स्तुयते, तेभ्यः जगतः मङ्गलं च काम्यते । वृक्षहीनतया सृष्टेः अस्तित्वमससम्भवमिति ज्ञातमासीत् वैदिकऋषिभिः । अतः मुक्तकण्ठेन गीयते वृक्षस्य स्तुतिः । काम्यते वृक्षस्य समृद्धिः – मधुमान् नो वनस्पतिः[7] इत्यादिभिः ।
वृक्षः-वृक्षँ वरणे(604) इति वृक्ष् धातोः 'नान्दिग्राहिपचादिभ्यो ल्युणिन्यचः' [8] सूत्रेण पचादेः अच् योगेन वृक्षेति शब्दो निष्पन्नः । वरणं करोति निरपेक्षतया स्वीकरोति सर्वान् इति वृक्षः । यः कोऽपि वृक्षमाश्रयते सर्वान् अङ्गीकरोत्येषः । उपकर्तारः अपर्तारः सर्वे वृक्षसकाशात् उपकृताः भवन्ति । वृक्षः स्वोपकर्तारं यथा सन्तुष्टीकरोति तथा हि छेदनकर्तारमपि शीतलछायाप्रदानेन तृप्यति इति वृक्षः सार्थकः । पक्षान्तरे ओव्रश्चु छेदने (1296) इति व्रश्च् धातोः सक् योगेन वृक्षेति शब्दः निष्पद्यते छिद्यते इत्यर्थे । मनुष्यः चिरकालं वृक्षनिर्भरस्तिष्ठति । नित्यव्यवहार्यं सर्वं वृक्षावयवेन एव निर्माय जीविकां निर्वहति । अतः

1. भोलानाथ तिवारी, भाषाविज्ञान, पृ-263
2. महाभाष्य आ 1, वा 1
3. न्यायसिद्धान्तमूक्तावली, शब्दखण्डः
4. वाक्यपदीय, ब्रह्मकाण्ड, 50
5. महाभाष्य, 3/3/1 (उणादयो बहुलम्)
6. अमरकोश, द्वितीयकाण्ड, वनौषधिवर्ग 5
7. ऋग्वेद, म 1, सू 90. म 8
8. अष्टाध्यायी 3/1/134

पुराकालात् वृक्षस्य छेदनं करोति अयं मनुष्यः । ब्रश्च-धातोः प्रयोगात् वृक्षस्य छेद्यता ज्ञायते । प्राचीनसाहित्येषु बहुस्मिन् वृक्षशब्दस्य व्यवहारः दृश्यते । महाकविकालिदासस्य कालजयिनाटके अभिज्ञानशाकुन्तले वृक्षकः शब्दः प्रयुक्तः प्राप्यते । यथा अनुसूयायाः उक्तिः – हला शकुन्तला, त्वत्तोऽपि तातकाश्यपस्याश्रमवृक्षकाः प्रियतरा इति तर्कयामि ।[9] तथा च शकुन्तलायारुक्तिः – वातेरितपल्लवाङ्गुलिभिस्त्वरयतीव मां केसरवृक्षकः।[10] अन्यत्र यथा महाभारते –

सुखदुः खयोश्च ग्रहणाच्छिन्नस्य च विरोहणात् ।
जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते ।।[11]

शब्दोऽयं बहुव्यवहृतः सर्वजनविदितश्च । अतः अलोच्येऽस्मिन् प्रबन्धे बृक्ष-शब्दम् उपजीव्य तद्भिन्नाः शब्दाः वृक्षास्य समार्थकशब्दतया उपस्थाप्यन्ते ।

महीरुहः – मह पूजायाम् 1868 मह धातोः महीति पदस्य उत्पत्तिः । मह्यते पूज्यते इति महि, पृथिवी। मह्यां पृथिव्यां रोहति[12] प्रादुर्भावतीति महीरुहः । पृथिव्याः संस्पर्शेण एव बीजादङ्कुरं जायते । पृथिवी एव वृक्षस्य जन्माधारः । पृथिव्यां जायते इति वृक्षस्य महीरुहेति नामान्तरम्। संस्कृतसाहित्ये बहुस्मिन् वृक्षार्थे महीरुहेति पदस्य प्रयोगः दृश्यते । यथा महाभारते –

पुष्पैः सुरगणान् वृक्षाः फलैश्चापि तथा पितृन् ।
छायया चातिथिं तात पूजयन्ति महीरुहः ।।
किन्नरोरगरक्षांसि देवगन्धर्वमानवाः ।
तथा ऋषिगणाश्चैव संश्रयन्ति महीरुहान् ।।[13] इत्यादिः ।

**शाखी –** शाखास्त्येति शाखी । शाखति गगनं व्याप्नोति इति शाखा वृक्षाङ्गः । वृक्षस्य मूलकाण्डं भूपृष्ठात् उर्ध्वं बर्धते । तस्य अङ्गानि पुनः मूलकाण्डात् उर्ध्व प्रसरन्ति । एवं प्रसरणशिलाः अवयवाः शाखाः, अवयवी च शाखी वृक्ष इत्यर्थः । पक्षान्तरे अवश्यं शाखति इति शाखी । अर्थात् यः अवश्यमेव व्याप्तो भवति स शाखी वृक्षः । वृक्षः शाखापल्लवादिभिः व्याप्तः भवति अतः तस्य शाखीति संज्ञा यथार्थ । व्याख्यासुधायामुच्यते – शाखी स्यात् पादपे वेदे तुरष्काख्यजने पुमान् ।[14] साहित्ये अस्य दृष्टान्तो यथा –

हैयङ्गवीनमादाय घोषबृद्धानुपस्थितान्।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखीनाम् ।।[15]

अन्यत्रापि –

कुल्याम्भोभिः पवनचपलैः शाखीनो धौतमुला
भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन ।
एते चार्वागुपवनभुविच्छिन्नदर्भाङ्कुरायां
नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति ।।[16] इत्यादिः ।

**विटपी –** विटपः शाखादिः अस्त्यस्योति विटपी । विटपपदस्यार्थः – वेटति शब्दायते इति विटपः अर्थात् शब्दमुत्पादयति इति विटपः शाखापल्लवसमुदायः । वायुप्रभावात् परस्परघर्षणेन शाखापल्लवादि-वृक्षायवयवाः शब्दायन्ते । एवं शब्दायमानः अवयवः विटपः, अवयवी च विटपी वृक्षः ।तद्दृष्टान्तो यथा –

पृष्टाः खलु परपुष्टाः परितो दृष्टाश्च विटपिनः सर्वे।
माकन्द न प्रपेदे मधुपेन तवोपमा जगति ।।[17]

अन्यत्रापि च – यद्यपि चन्दनविटपी फलपुष्पविवर्जितः कृतो विधिना ।
निजवपुषैव तथापि हि स हरति संतापमपरेषाम् ।।[18] इत्यादिः ।

**पादपः-** पादेन मूलेन पिवति रसानिति पादपः । अर्थात् मूलसाहाय्येण भूगर्भस्थरसानां पानं करोतीति वृक्षस्य पादपेति संज्ञा । वृक्षः जीवनार्थ भूमध्यात् मूलसाहाय्येण आवश्यकतत्त्वानि गृह्णाति । महाभारतस्य शान्तिपर्वणि उक्तमस्ति –

वक्त्रेणोत्पलनालेन यथोर्ध्वं जलमाददेत् ।
तथा पवनसंयुक्तः पादैः पिवति पादपः ।।[19]

---

9. अभिज्ञानशाकुन्तल, प्रथमाङ्क
10. तत्रैव
11. महाभारत, शान्ति 184/17
12. रुहँ बीजजन्मानि प्रादुर्भावे च – व्याख्यासुधा
13. महाभारत, अनु, अ 58, श्लो 28-29
14. व्याख्यासुधा
15. रघुवंश, 1/45
16. अभिज्ञानशाकुन्तलम्. अङ्क 1.15 (प्रक्षिप्तमिति मन्यते)
17. भामिनीविलासः, प्रास्तविकविलास, 1.29
18. आर्यासप्तशती, 487

पा-धातोः प्रयोगः यथा पानार्थे (भ्वादि 925) तथा रक्षणे (अदादि 1056) च दृश्यते । अतः पादपशब्देन पादेन मूलेन पाति रक्षति भूमिमात्मानं वोति अर्थमपि कर्तुं शक्यते । वृक्षः शक्ततया मूलस्थभूमिं धारयति । तेन भूमिक्षयः बाधते । क्षयात् रक्षति इति वृक्षस्य पादपेति संज्ञा । अथवा मूलेन गृहीतेन रसेन जीवति इत्यतः वृक्षः पादेनैव आत्मानं रक्षति अतः तस्य पादपेति नाम । नाममालायाः भाष्यकारेण अमरकीर्त्तिना अङ्घ्रिपेति शब्दस्य व्याख्यायामुक्तम्- अङ्घ्रिभिश्चरणैः पिबति पाति वा अङ्घ्रिपः । तत्र रक्षार्थे पा-धोतोः व्यवहारः वृक्षस्य कृते दृश्यते । पादपशब्दस्य व्यवहारः संस्कृतसाहित्ये बहुलं दृश्यते । यथा अभिज्ञानशाकुन्तले –

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथ वा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तिव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ।।[20]

अन्यत्रापि महाभारते –

तस्य पुत्रा भवन्त्येते पादपा नात्र संशयः ।
परलोकगतः स्वर्गं लोकांश्चाप्नोति सोव्ययान् ।।[21] इत्यादिः ।

**तरुः-** तरन्त्यनेन नरकमारोपका इति तरुः । अर्थात् वृक्षः आत्मनः रोपयितारं नरकादिकुगतिषु तारयति इत्यतः तस्य तरु इति संज्ञा । वृक्षरोपणं पुण्यप्रदम् । तेन रोपयित्रा बहुजनहितं साध्यते। येनोत्पन्नेन अपूर्वेण रोपयिता नरकादिन् तरति । न केवलं रोपणकर्ता तस्य भूतभविष्यवंशजाः अपि उपकृताः भवन्ति । महाभारते उक्तमस्ति –

अतीतानागते चोभे पितृवंशं च भरत ।
तारयेद्वृक्षरोपी च तस्माद्वृक्षांश्च रोपयेत् ।।[22]

अतः वृक्षं पुत्रवत् पालयोदित्युपदेशः बहुस्मिन् प्राप्यते । पुन्नाम नरकात् त्रायते इति पुत्रः सर्वेषां कांक्षितः भवति । किन्तु वृक्षः पुत्रादपि श्रेयस्करः । मत्स्यपुराणे श्रुयते –

दशकूपसमा वापी दशवापीसमो ह्रदः ।
दशह्रदसमः पुत्रो दशपुत्रसमो द्रुमः ।।[23]

संस्कृतकाव्यादिषु तरु इति शब्दस्यापि बहुत्र प्रयोगः दृश्यते । यथा उक्तम् –

भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्दुरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ।।[24] इत्यादिः ।

**अनोकहः-** अनसः शकटस्य अकं गमनं हन्ति प्रतिरोधं करोतीति अनोकहः । वस्तुतः अनोकहः इत्युक्ते नातिदीर्घः नाति-अवरः वृक्षः सूच्यते । मार्गे गमनकाले मार्गपार्श्वस्थाः लघुवृक्षाः शकटस्य गतिं शिथिलीकुर्वन्तीति तेषाम् अनोकहेति नामकरणम् । अस्य प्रयोगः रघुवंशे यथा–

पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पगन्धि ।
तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे ।।[25] इत्यादिः ।

**कुटः** – कुट कौटिल्येति निर्देशानुसारेण कुटति कुटिलं गच्छति इति कुटः । वृक्षस्य अवयवाः मूलकाण्डात् इतस्ततः वर्धनशीलाः कूटिलं गच्छन्ति । अतः वृक्षस्य कुटोति संज्ञा । पक्षान्तरे कौति शब्दायते पक्ष्यत्रेति कुटः अर्थात् पक्षिणः तत्र वृक्षे कूजन्ति इति वृक्षस्य कुटेति नामकरणम्।

**सालः-** सारोऽस्त्यस्येति सालः । सार पदस्य अर्थः स्यात् स्थिराशः । वृक्षः मूलावच्छेदेन स्थिरः। स्थिरांशः अस्ति अस्येति वृक्षस्य सालेति संज्ञा । अथवा वृक्षस्य कोमलत्वक् सार उच्यते । तदस्ति वृक्षस्येति सालः । पक्षान्तरे षल गतौ 547 इति निर्देशानुसारेण सलति वायुना चलति इत्यर्थे सालेति वृक्षः । वायुप्रभावेन वृक्षः चलमानः भवति अर्थात् शाखाप्रशाखादिनां कम्पनेन क्रियाशीलः भवति। अतः तस्य अन्यनाम सालः । संस्कृतसाहित्ये अस्य दृष्टान्तो यथा ब्रह्मपुराणे –

प्लक्षो वत्सस्तु वृक्षाणां दोग्धा सालस्तु पुष्पितः ।
पलाशपात्रं क्षीरञ्च छिन्नदग्धप्ररोहणम् ।।[26]

19. महाभारत, शान्ति, 184/16
20. अभीज्ञानशाकुन्तल 5/7
21. महाभारत, अनु 58/23
22. महाभारते, अनुशासन, 58/23
23. मत्स्यपुराण 154.512
24. अभिज्ञानशाकुन्तल 5/12
25. रघुवंशम् 2.13
26. ब्रह्मपुराण अ 2/109

**पलाशी** – पलाशं विद्यते अत्रेति पलाशि । पलाशं नाम पलं गतिं कम्पनम्, अश्नुते व्याप्नोतीति पलाशं, पर्णम् । वायुप्रवाहात् कम्पायमानानि पलाशानि विद्यन्ते वृक्षे इति तस्य पलाशीति संज्ञा। महाभारते प्राप्यते अस्य दृष्टान्तः । तद्याथा –

अङ्कुरं कृतवांस्तत्र ततः पर्णद्वयान्वितम् ।
पलाशिनं शाखीनञ्च तथा विटपिनं पुनः ।।[27] इत्यादिः ।

**द्रुः-** द्रवति उध्र्वं गच्छतीति द्रुः । वृक्षः भूमध्यात् शाखादिसहितम् उर्ध्वदेशं प्रति प्रसरति इत्यतः तस्य द्रु इति संज्ञा । प्रयुक्तोऽयं मनुसंहितायाम् –

आददीताथ षड्भागं द्रुमांसर्सर्पषाम् ।
गन्धौषधिरसामाञ्च चर्मणो वै दलस्य च ।।[28] इत्यादिः ।

**द्रुमः** – समुदाये वृत्ता शब्दाः अवयवेष्वपि वर्तन्ते इति न्यायात् समुदाये वृक्षे प्रयुक्तेन द्रुः इत्यनेन वृक्षावयवः शाखा अपि बोध्यते । अतः द्रुः शाखा विद्यते अस्येति अर्थे द्युद्रुभ्यां मः[29] इति द्रुमः वृक्षः वृक्षपर्यायः । तद्दृष्टान्तो यथा –

रम्यान्तरः कमलिनीहरितैः सरोभिच्छायाद्रुमैर्नियमितार्कमयुखतापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः शान्तानुकुलपवनश्च शिवश्च पन्थाः ।।[30]

उच्यते महाभारते – पादैः सलिलपानाच्च व्याधीनां चापि दर्शनात् ।
व्याधिप्रतिक्रियात्वाच्च विद्यते रसनं द्रुमे ।।[31] इत्यादिः ।

**अगमः** – न अगति(146 अगिँ गतौ) न गच्छति(982 गम्लृ गतौ) इति अगमः । वृक्षः आमृत्युः एकस्मिन्नेव स्थाने वर्तते । बीजारोपितस्थाने एव उत्पद्यते बर्धते म्रियते च । गतिहीनत्वात् अगमः, अगच्छः, स्थिरः, नगः, स्थाणुः इत्येते शब्दाः वृक्षं सूचयन्ति ।

27. महाभारत, आदिपर्व, अ 43/ 10

28. मनुस्मृति 7/131

29. अष्टाध्यायी 5/2/108

30. अभीज्ञानशाकुन्तलम 4/11

31. महाभारत, शान्ति, 184/16

कोशान्तरेषु यादवप्रकाशस्य वैजयन्त्याम् अन्येषां केषाञ्चित् शब्दानाम् उल्लेखः प्राप्यते। यथा –

वृक्षो द्रुमो भूरुहो द्रुर्विटपी विष्टरोऽङ्घ्रिपः ।
अनोकहो नगो भूरुट् तरुश्शाखी कुठः कुजः ।।
वसुः करालिकोऽगच्छो जर्णो रुक्षः पुलाक्यपि ।[32]

भुवि रोहति प्रादुर्भवति इति भुरुहः । विस्तिर्य्यते इति विष्टरः । अङ्घ्रिरुपेण नमते जलाद्याकर्षणेन कल्प्यते यत् यत् अङ्घ्रिः वृक्षमूलम्, तेन अङ्घ्रिणा पिवति रसानिति अङ्घ्रिपः। कराणां करसदृशानां शाखानाम् आलिः श्रेणिर्यत्र सः करालिकः । जीर्य्यते क्षीणीभवतीति जर्णः। पोलति उच्छ्रितो भवतीति पुलाकः (तुच्छधान्यम्) । कोः पृथिव्याः जायते इति कुजः । कारं वधं करोतीति कारस्कारः (बिषवृक्षः) इत्येतेषां वृक्षपर्यायाणां व्यवहारो अधुना क्वचित् दृश्यते । एतदतिरिच्य अन्येषु कोशग्रन्थेषु अपि बहवः वृक्षपर्यायाः प्राप्यन्ते । यथा – भुजः, कुठः, अद्रिः, कुटारः, कुचिः, महीरुट्, धरणीरुहः, क्षीतजः, धवः, शिखरी, कुञ्जः, स्थाणु इत्यादिः ।
संस्कृतं स्वीयमहिम्नैव अनुपमम् । सांप्रतिक-संगणकयुगेऽपि संस्कृतस्य गुरुत्वम् अनस्वीकरणीयम् । यतः संगणकयन्त्रेण अपि सुव्यवस्थिता भाषेयं भाषान्तराणामपेक्षया सर्वोत्तमा इति स्वीकृता । अनर्थकः कोऽपि प्रयोगः संस्कृतभाषायां नास्तीति संस्कृतसाहित्यस्य अनुध्यानेन एवं बहुनि तथ्यानि गोचराणि भवन्ति यानि विस्तृतं गभीरञ्च आलोचनमपेक्षन्ते।

## सन्दर्भ


1. अमरसिंह । अमरकोश । व्याख्या । ब्रह्मानन्द त्रिपाठी । वाराणासीः चौखम्बा सुरभारती प्रकाशन, 1982 ।
2. अमरसिंह । नामलिङ्गानुशासन । टीका । हरगोविन्द शास्त्री । वाराणसीः चौखम्बा संस्कृत सीरीज आफिस,1968 ।
3. अमरसिंह । नामलिङ्गानुशासन । सम्पा । कृष्णजी गोविन्द ओका । पुणाः डी जी खण्डेकर, 1913।
4. अमरसिंह । नामलिङ्गानुशासन । सम्पा । पण्डित शिवदत्त । वम्बईः निर्णयसागरप्रेस, 1929।
5. गोबर्धनाचार्य । आर्यासप्तशती । सम्पा । काशिनाथ पाण्डुरत्न परव । वम्बईः निर्णयसागरप्रेस, 1895।
6. जगन्नाथ । भामिनीविलास । अनु । महावीरप्रसाद द्विवेदी । बम्वईः खेमराज श्रिकृष्णदास, 1957 ।
7. तिवारी । भोलानाथ । भाषाविज्ञान । इलाहावादः किताब महल, 2012 ।


32. वैजयन्ती, भूमिकाण्डः, वनाध्यायः, 4-5

8. पतञ्जलि । व्याकरणमहाभाष्य । अनु । चारुदेव शास्त्री । दिल्लीः एम्. एल्.बी.डी, संवत् 2025।
9. न्यायपञ्चानन, विश्वनाथ । भाषापरिच्छेद । सम्पा । पञ्चानन भट्टाचार्य । कोलकताः महाबिधि वुक् एजेन्सी, 2016 ।
10. सातवलेकर, दामोदर । भाष्य । ऋग्वेद का सुबोध भाष्य । भाग 1 । पारडीः स्वाध्यायमण्डल, 1985।
11. भट्टोजि दीक्षित । वैयाकरणसिद्धान्तकौमुदी । तृतीयभाग । सम्पा । गिरिदरशर्मा, परमेश्वरानन्दशर्मा। दिल्लीः एम्.एल्.बी.डी, 2011 ।
12. वेदव्यास । महाभारत । खण्ड 1 । सम्पा । रामनारायणशास्त्रीपाण्डेय । गोरखपुरः गीताप्रेस।
13. वेदव्यास । महाभारत । खण्ड 5 । सम्पा । रामनारायणशास्त्रीपाण्डेय । गोरखपुरः गीताप्रेस।
14. वेदव्यास । महाभारत । खण्ड 6 । सम्पा । रामनारायणशास्त्रीपाण्डेय । गोरखपुरः गीताप्रेस।
15. वेदव्यास । मत्स्यपुराण । अनु । कालीचरण । लखनऊः मुंशीलवलकिशोर, 1892 ।
16. वेदव्यास । ब्रह्मपुराण । मुम्वईः खेमराज श्रीकृष्णदास ।
17. मनु । मनुस्मृति । अनु । हरगोविन्दशास्त्रि । वारणासीः चौखम्बा संस्कृत सीरीज आफिस ।
18. धनञ्जय, नाममाला । सम्पा । शम्भुनाथ त्रिपाठी । काशीः भारतीय ज्ञानपीठ, 1950 ।
19. Kale MR. Edit. The Abhijnanasakuntalam of Kalidasa, Delhi: M.L.B.D; c1969.
20. Kale MR. Edit. The Raghuvamsam of Kalidasa, Gopal Narayan & Co. 1922.
21. Kielhorn F. Edit. The Vyakarana Mahabhasya of Patanjali, Vol-II. Bombay: Govt. Central Book Depot; c1883.
22. Oppert. Gustav. Editor, The Vaijayanti of Yadavaprakasa. Madras: Madras Sanskrit and vernacular text publication society.



International Journal of Sanskrit Research
अनन्ता

**ISSN: 2394-7519**
IJSR 2024; 10(1): 25-30

www.anantaajournal.com
Received: 15-11-2023
Accepted: 19-12-2023

**Malini Ramanna**
Research Scholar, Srinivas Yoga Samskrit Research Centre, Mukka, Suratkal, Mangaluru, Karnataka, India

**Corresponding Author:**
**Malini Ramanna**
Research Scholar, Srinivas Yoga Samskrit Research Centre, Mukka, Suratkal, Mangaluru, Karnataka, India

# आत्मानिरुपणम्

## Malini Ramanna

**DOI:** https://doi.org/10.22271/23947519.2024.v10.i1a.2283

**प्रस्तावना**

भारतीयदर्शनस्य विभिन्नेषु विद्यालयेषु आत्मा एक: केन्द्रीय: अवधारणा अस्ति।येषु आत्मा जीवात्मा, परमात्मा च । तथा परमवास्तविकता इत्यतयोः सम्बन्धे भिन्ना: दृष्टिकोन: सन्ति। येषु कथयति यत् ते: सर्वथा समाना: सन्ति, सर्वथा भिन्न:, अथवा युगपत् अविभिन्न: तथ भिन्न: इति।

हिन्दु धर्मस्य षड् विद्यालयनां मतं यत् प्रत्येकस्मिन् जीवे आत्मन: भवति, यत् शरीरं मनससंकुलात् भिन्नम् अस्ति। एषा बौद्धसिद्धान्तेन सह प्रमुख: भेद: अस्ति। जीवस्य अनुभवजन्यघटकेषु अपरिवर्तनीयं तत्त्वं वा आत्मन: वा न दृश्यते।

भारतीय ग्रन्थेषु आत्माशब्दस्य प्रारम्भिक: ऋग्वेदे दृश्यते। न्यायशास्त्रे आत्मा मनुष्यचैतन्यस्य उपधातु: अगोचर: पदार्थ: इति परिभाषितवन्त: न्यायविद्यालयेन न केवलम् आत्मा सिद्धन्तस्य विकास: कृत:, अपितु हिन्दुदर्शने अनेकविधा योगदानं दत्तम्। नैयायिक: अनुमानद्वारा आत्मास्य अस्तित्वं स्वीकरोति।

अत: आत्मा यस्मिन् चैतन्यं किन्तु जीवस्य मानसिकक्षमता अपि सन्ति। यथा तर्क:, चरीत्रं, भावना, चेतना, स्मृति:, बोध:, चिन्तनं च हिन्दुधर्म: एते सर्व: आत्मा। प्रतिरुपे मूर्तवास्तविकतायां समाविष्टा: सन्ति।

आत्मा हिन्दुधर्मे शाश्वत:, अविनाशी, कालात् पर: इति मन्यते, **"न तु शरीरस्य वा चैतन्यस्य वा समानं, अपितु .. यस्मात्परं किमपि एतान् सर्वान् व्याप्नोति"** इति मन्यते। आत्मा अविचल:, नित्य:, अन्त: प्रभावित: आत्मा य: व्यक्तित्वेन अप्रभावित:, अहङ्कारेण अप्रभवित:, आत्मा स नित्यमुक्त: कदापि न बद्ध:, साक्षात्कृत: प्रयोजन: अर्थ: जीवन: मुक्ति:।

**वेदा:**

भारतीयदर्शन ग्रन्थेषु आत्माशब्दस्य प्रारम्भिक: प्रयोग: ऋग्वेदे दृश्यते।यास्क,:प्रचीन: व्याकरणविद: अस्य ऋग्वेदस्य श्लोकस्य विषये टिप्पणीं कुर्वन्।आत्मास्य निम्नलिखितार्थन् स्वीकरोति। व्यापक: सिद्धन्त:,यस्मिन् जीवे अन्यतत्त्वानि, अकीकृतानि सन्ति। परम:, भावसिद्धन्त: च इति।

आत्मा सर्वेषु उपनिषदेषु केन्द्रविषय: अस्ति, **"भवत: आत्मानं ज्ञातव्यम्"** इति।तेषां विषयगतकेन्द्रेषु अन्यतमम् अस्ति। ब्रह्माण्डविज्ञानं च अभेद्यौ स्त:, एतेषु ग्रन्थेषु उक्तं यत् प्रत्येकस्य व्यक्तिस्य आत्मा मूलं न शरीरं, न मन: न अहङ्कार:, अपितु आत्मा उपनिषदेषु आत्मा ब्रह्मा सम्बन्धे द्वौ विशिष्टौ, किञ्चित् विचलितौविषयौ व्यक्तौ स्त:। केचन ब्रह्म

आत्मनेन सह समानम् इति उपदिशन्ति,अन्ये तु आत्मा ब्रह्मणाः भागः अस्ति । किन्तु तस्य समानः न इति उपदिशन्ति। अयं प्रचीनः वादविवादः हिन्दुधर्मे विभिन्नेषु द्वैतः, अद्वैतः, सिद्धान्तेषु प्राफुल्लितः।

बादरायणस्य ब्रह्मसूत्रे एतेषां किञ्चित् परस्परविरोधिनां सिद्धान्तानां विश्लेषणं एकीकरणं च कृत्व आत्मा ब्रह्म च केषुचित् पक्षेषु विशेषतः अज्ञानावस्थायां भिन्नौ स्तः परन्तु गहनतमस्तरस्य आत्मसाक्षात्कारस्य च अवस्थायां आत्मा इति उक्तम् ब्रह्म च समानं अविभिन्न (अद्वैतम्)।

उपनिषदेषु कृतः प्रसिद्धः दावोऽस्ति यत् आत्मा एव ब्रह्मा इति। तैतरीयोपनिषदस्य नवमे अध्याये एवं निवेदितम्। ब्रह्मानन्दं यो वेदः, यतः मनसा सह वचनं निवर्तन्ते, तत्प्राप्तुं असमर्थः। न किञ्चिदपि बिभेति। न कस्मादमहं भद्रं न कृतवान् इति विचारेण आत्मानं व्यथते। परन्तु ब्रह्मात्मनयोः अस्यैकत्वस्य प्रसिद्धतं प्रत्यक्षं च सूचनं चण्डोग्योपनिषद् 6, 7, 8, मध्ये उद्दालकस्य तस्य पुत्रस्य श्वेतकेतुस्य च संवादे प्राप्यते। अत्र उद्दालकः स्वपुत्रं तत्, त्वम्, असि,यस्य अनुवादः "तत् त्वं असि" इति उपदिशति। विद्वांसः अस्य वाक्यस्य व्याख्यां कृतवन्तः। यत् मानवात्मा विश्वस्य भूमि निर्मायिन्त्याः व्यापकस्य ईश्वरस्य सूक्ष्मः जगत् अस्ति। एतादृशवाक्यानाम् आधारेण वेदान्तस्य सिद्धान्तत्रयस्य परवर्षेषु ब्रह्म आत्मनयोः अस्य तुल्यतायाः स्वरूपस्य भिन्नाः व्याख्याः प्रदत्ताः॥

**अद्वैत वेदान्तः**

अद्वैतदर्शनस्य विकासं कृतवान् प्रसिद्धः हिन्दुदार्शनिकः शङ्करः ब्रह्मात्मणयोः उपनिषदसम्बन्धस्य व्याख्यां अद्वैतवादस्य इति अकरोत्। आत्मा आत्मा वा यस्मात् परम वास्तविकात् निष्पद्यते तस्मात् अभेद्यः इति सः अवदत्। शङ्करस्य ब्रह्माणः उच्चतमं अनिर्वचनीयं रूपं विहाय जगतः समग्रता माया। ब्रह्मव्यक्ति आत्मनयोः प्रतीयमानभेदाः भौतिकजगति विशेषाणां भ्रान्तप्रतीतेन सृज्यन्ते। एकदा व्यक्तिः मायाविशेषवस्तूनाम् सर्वान् भेदान् परिहरति। तदा शङ्करः मन्यते स्म यत् ते तदा आत्मा ब्रह्मा इति अवगन्तुं शक्नुवन्ति। तदा एवा ते मायामुपलायन्ते ब्रह्मणैकत्वे प्रलीयन्ते। अद्वैत इति नाम्ना प्रसिद्धा दार्शनिकव्यवस्था वेदनाता एवं आत्माब्रह्मायोः मध्ये किमपि द्वन्द्वं नकारयति स्म।

**विशिष्टाद्वैत वेदान्त**

विशिष्टाद्वैत वेदान्तः रामानुजेन अस्याः विद्यालयस्य अनुसारं ब्रह्मा आत्माभिः द्रव्यैः च "अद्वैतः" "योग्यम्"च भवति। तथापि आत्मा स्वस्य इच्छां धारयति, अन्ये तस्य निर्मणाय, संरक्षणाय च ब्रह्माश्रितः भवति। रामानुजस्य ब्रह्मसंकल्पना व्यक्तिगतरूपेण ईश्वरस्य पूजां अनुमन्यते स्म। तथा च मोक्षस्य कल्पना न तु आत्माब्रह्मायोः अवैयक्तिकैकत्वे विलीनीकरणं अपितु तेषां विशिष्टपरिचयस्य संयोगरूपेण रामानुजस्य कृते शङ्करस्य विहितसमत्व साक्षात्कारस्य अपेक्षया ब्रह्मणेन सह आत्मा संयोगः संसारात् मुक्तिः च ईश्वरस्य प्रति तीव्रव्यक्तिगतभक्ति द्वारा प्राप्यते। मुक्तिः ब्रह्मणः दिव्यशक्तेः अनुभवं गृह्णाति यद्यपि व्यक्तिगतात्मा शङ्करस्य निश्चयवत् ब्रह्मणि न विलीयते।

**द्वैत वेदान्तः**

द्वैत वेदान्तः ब्रह्मा आत्मा च किमपि तुल्यतां नकरयति। अपितु ब्रह्मा भौतिकब्रह्माण्डात् तदन्तर्गतात्मनाभ्यां च सर्वथा पृथक् श्रेष्ठं च भवति संस्थापकः मध्वाचार्यः, सर्वे मानावाः मूलतः दिव्याः इति अद्वैतशिक्षायाः अङ्गीकारं कृतवान् तस्य स्थाने दिव्यस्य व्याख्यां मानवतायाः भौतिकजगत् च सर्वथा पृथक् इति कृतवान् रामानुज इव मध्वाचार्यः अपि दावान् अकरोत् यत् आत्मा वास्तविकाःसत्ताः सन्ति । न केवलं परस्परं अपितु ईश्वरतः अपि स्वतन्त्रया विद्यते। यद्यपि प्रत्येकस्य आत्मा अस्तित्वस्य निरन्तरतायाश्च उत्तरदायी ईश्वरः अस्ति ब्रह्मा आत्मा च माध्वस्य अनुमानेन न समानाः यथा सूर्यस्य प्रतिबिम्बाः सूर्यसैव भवति। मध्वाचार्याऽपि मोक्षप्राप्तर्थं भक्तिं विधीयति यद्यपि भौतिकं जगत् तदन्तर्गतं सर्वात्मानां च भेदः मोक्षप्राप्तेः अनन्तरम् अपि तिष्ठति।

**भगवद्गीतायाः**

द्वितीयाध्यायस्य 10 – 30 श्लोके कृष्णः अर्जुनं आत्मनः अविनाशीत्वं अवगन्तुं आग्रहं करोति। आत्मा निवसन्तं परिमितसरीरं अतिक्रमयति इति बोधयति। आत्मा न हन्ति न हन्तुं शक्यः यथा नित्यं जन्ममरणेन वा अप्रभावितः आत्मा नूतानानां कृते पुरातनशरीरान् कथं परित्यजति इति दर्शयितुं वस्त्रपरिवर्तनस्य उपमा प्रयुक्ता अस्ति। कृष्णः आत्मा नित्यं अस्तित्वं बोधयति यत् सः विविधाः जीवनपदवीं गत्व शरीरान् कथं परिवर्तनं कुर्वन् अपि सः अप्रभावितः एव तिष्टति इति व्याख्यायते। अगोचरं अचिन्त्यं च अविचलं च इति।

**धर्मसूत्रा**

धर्मसूत्राणि धर्मशास्त्राणि चा अत्मनसिद्धान्तस्य शिक्षां समाकालयन्ति। अपस्तम्बा धर्मसूत्रं प्राचीनतमं भारतीयं धर्मग्रन्थं यथा, अध्यायान आत्माज्ञानम्" इति शीर्षकं कृत्वा ततः पठति।

आत्मनः ज्ञानप्राप्तेः उच्चतरं वस्तु नास्ति। आत्मा ज्ञानप्राप्तिनिर्दिष्टानि श्लोकानि वेदात् उद्घृतानि

करिष्यामः।द्रव्यावृतस्य शयितस्य अमरः निर्मलस्य तस्य निवासः सर्वेजीवः। आत्मा ज्ञानं यतते पण्डितः। स एव सर्वेषु प्राणिषु शाश्वतः भागः, यस्य सारः प्रज्ञा, यः अमरः अविकारी, शुद्धः, स विश्वं, स एव परमं लक्ष्यम्।

**मीमांसकः**

हिन्दुधर्मस्य संस्कारत्मके मीमासविद्यालये, शाश्वतं,सर्वव्यापी, स्वभावतः सक्रिय तत्वं यत् अहं चेतना इति परिचितं भवति। हिन्दुधर्मस्य अन्येषां सर्वेषां विद्यालयानां विपरीतम् मीमांसकविद्वांसः अहङ्कारं आत्मनः च समानं मन्यन्ते स्म। मीमांसकविद्यालयस्य अन्तः प्रत्ययानां विचलनम् आसीत्। कुमारीलः यथा आत्मनः अहं चैतन्यस्य विषयः इति मन्यते। प्रभाकरः आत्मनः अहं चैतन्यविषयः इति मन्यते। मीमांसकः मन्यन्ते स्म यत् महत्त्वपूर्णं सिद्धया पूर्णानि कर्माणि संस्काराणि च सन्ति। एयदेव पुण्यस्य निर्माणं करोति, आत्मा विषये ज्ञानं च अङ्कयति।

**बौद्ध धर्मः**

हिन्दुनां विपरीतम् बौद्धाः न मन्यन्ते यत् मनुष्याणाम् अन्यजीवरूपपेषु च आत्मा अथवा आत्मानः इति स्थायी, अविनाशी, निरपेक्षः च सत्ता अस्ति । अतः बौद्धाः हिन्दुसिद्धान्तं आत्मा इति अङ्गिकुर्वन्ति। एतादृशाः विचाराः मनुष्यैः तेषां अनित्यतां नकारयितु निर्मिताः इति दावान् कुर्वन्ति। बुद्धः उपदिशति स्म यत् शाश्वतस्य आत्मा विचारः एकः भ्रमकः विश्वासः अस्ति। यः अन्ततः हानिकारकः अस्ति। "मम" इति नकारत्मकसंकल्पनाः उत्पादयति, तस्मात् इच्छा, आस्क्तिः, द्वेषः च मनोवैज्ञानिकः आधारः प्रदाति संक्षेपेण बुद्धः आत्मा सर्वेषां दृष्टानां मूलं वर्णितवान्, तया सृजितानां आसक्तिनां लक्षणं च स्वस्य निर्वाणप्राप्तेः निराकरणं कृतवान् एतावता सम्यक् दार्शनिक अस्तित्व विस्तारेण आत्मा अस्वीकारः बौद्धधर्मं अन्येषु विश्वधर्मेषुअद्वितीयं इति चिह्नयति।

बौद्धचिन्तकाःअपरिवर्तनीयस्य आत्मा लक्षणं कृतवान्तः यत् क्षणात् प्रवाहमानैः मनोभौतिककारकैः निर्मितस्य भ्रमस्य अपेक्षया अधिकं नास्ति। एते मनोभौतिककारकाः पाली थेरवादपरम्परायां पञ्च स्कन्धाः इति प्रसिद्धाः सन्ति। ये मानवव्यक्तित्वं यत् निर्दिष्टं तत् निर्मन्ति, परन्तु कथमपि स्थायी अहङ्कारं आत्मा वा सूचनं वा न कुर्वन्ति। एताः मौलिकाः मनोशरीरिकः अवस्थाः सन्ति। रुपं, भावना, संज्ञानं इच्छा, चेतना इति।

बौद्धधर्मस्य महयानशाखायाः अन्तः अत्यन्तं प्रभावशाअलिनः तथगतगर्भसूत्रेषु दृश्यमानानां कतिपयानां द्वारेण ज्ञायते। यत् पञ्चानां स्कन्धानां उपघटनारूपेण प्रतीयमानस्य अनित्यस्य मायाम्यस्य च आत्मनः सर्वथा विपरीतरूपेण शाश्वतः "सत्यः आत्मा" विद्यते अयं "सत्यात्मा" परमप्रबुद्धस्वभावे बुद्धः एव अन्यः नास्ति। अस्य बुद्धः - आत्मस्य सारः, सर्वेषु प्राणिषु असृष्टः, अविकारी, वर्तमानः इति वर्णितः अस्ति। अस्य सिद्धान्तस्य विस्तरेण चर्चां कृत्वा महायानमहापरिनिर्वाणसूत्रं च इति। यत् अस्य आत्मा कदापि मौकिकेन नित्यं परिवर्तनशीलेन च लौकिकाहङ्कारेण सह भ्रमः न कर्तव्यः, यः सच्चिदानन्दं दृष्ट्या गोपयति।

बौद्धधर्मः न केवलं व्यक्तिगतात्मानः अपितु आत्मनः अपि अवधारणं नकारयति, व्यक्तिगतशाश्वतात्मा वा निरन्तर सार्वभौमिकात्मानः भागग्रहणस्य वा कोऽपि भावः भ्रमात्मकः इति प्रतिपादयति।

**सांख्यः**

साख्ये हिन्दुधर्मस्य प्रचीनतमः विद्याल्यः पुरुषः, सक्षी-चेतना आत्मा इति। निरपेक्षं, स्वतन्त्रं, अगोचरं, अन्यसंस्थाभिः माध्यमेन अज्ञातं, मनसा वा इन्द्रियाणां वा कस्यापि अनुभवस्य उपरि, कस्यापि शब्दस्य वा व्याख्यायाः वा परं भवति। शुद्धं **"अविशेषणात्मकं चैतन्यम्"** एव तिष्टति। पुरुषो न जायते न च जायते। न कश्चित् उपनामः पुरुषं योग्यं कर्तुं शक्नोति, न च तत् द्रव्यं वा विषयीकरणं वा कर्तुं शक्नोति।

सांख्यः अहङ्कारं सुखदुखः हेतुः मन्यते। आत्मा ज्ञानं कैवल्य, शरीर मनसजटीलात् आत्मा विच्छेदः इति साधनम्। सांख्ये योगे च पुरुषः विरुध्यते मुलद्रव्यं, यथा द्वै अस्तित्वात्मक वास्तविकता। सर्वे सजीवाः निर्जीवाः च पदार्थाः सर्वे मनोवौज्ञानिकाः अनुभवाः च प्रकृतिनिर्गमाः एव। पुरुषस्य प्रकृतिभ्रमः एव आत्मानंबन्धने धारयति; पुरुषस्य प्रकृतिविच्छेदः तस्य मोक्षः इति।

**योग दर्शनं**

हिन्दुधर्मस्य योगविद्यालयस्य आधारग्रन्थे पतञ्जलिस्य योगसूत्रे आत्मा उल्लेखः बहुषु श्लोकेषु, विशेषतः च तस्य अन्तिमे पुस्तके, यत्र समाधिःआत्मज्ञानस्य कैवल्यस्य च मार्गः इति वर्णितः अस्ति योगसूत्रे आत्मा पूर्वकेचन उल्लेखः सन्ति। यत्र श्लोकः 2.5 अन्तर्भवति। य्त्र अज्ञान्स्य प्रमाणेषु "आत्मा यत् नास्ति तत् आत्मनः इति भ्रमः" अन्तर्भवति।

चतुर्थे पुस्तके योगसूत्रे आध्यात्मिकमुक्तिमुक्तं यत्रः योगिनः विशिष्टाआत्मज्ञानं साधयति, आत्मनःइति मनः न पुनः भ्रमति, प्रकारस्य दुखैः चिन्ताभिः वा प्रभावितं न भवति, अज्ञानं विलुप्तं भवति, "शुद्धं चैतन्यम्" इति च उक्तम् स्वस्य शुद्धस्वभावे निवसति" इति।

योगविद्यालयः आत्मनस्य अवधारणात्मकमूलाधारेषु सांख्यविद्यालयस्य सदृशः अस्ति। आत्मा एव कैवल्यवस्थायां उभयविद्यालये आविष्कृतः. साक्षात्कृतः च भवति। सांख्यवत् इदं न एकमेव सार्वत्रिकं आत्मनम्। एतत् अनेकेषु व्यतिगतात्मसु अन्यतममस्ति। यत्र प्रत्येकं **"शुद्धचेतना स्वस्य**

**शुद्धस्वभावे निवसति"**, एक: अद्वितीय: विशिष्ट: आत्मा इति रूपेण। परन्तु योगविद्यालयस्य पद्धति: हिन्दुदर्शनस्य अन्येष बहुधा प्रभावशालिनी आसीत्। वेदन्तैकवार: उदाहरणार्थं, अद्वैतवेदान्ते यथा अवधारणा कृता, जीवनमुक्तिं अस्मिन् जीवने आत्मसाक्षात्कारं प्राप्तुं साधनरूपेण योगं स्वीकृतवान्। योग: सांख्य: च आत्मा **"असम्बद्ध: गुणहीन: स्वप्रकाश, सर्वव्यापी सत्ता"** इति परिभाषयत। य: चैतन्येन सह समान: अस्ति।

**न्यायशास्त्र**

नैयायिक: आत्मा मनुष्यचैतन्यस्य उपधातु: अगोचर: पदार्थ: इति परिभाषितवन्त:। आत्मा शरीरं, इन्द्रियविषयाणि, बुद्धि:, मन:, क्रियकलाप:, दोष:, प्रेत्यभव:, फलं, दुख:, आनन्दं च सम्यक् ज्ञानस्य विषया: सन्ति। नैयायिका: आत्मनस्य गुणा: सन्ति, तस्य गुणै: भिन्न: इति बोधयति।
सर्वव्यवहारहेतुत्वे सति गुणत्वं बुद्धे: लक्षणम्। बुद्ध्यादय: अष्ट आत्मन: गुणा:। एते बुद्धि:, सुख:, दुख: इच्छा, द्वेष:, प्रयत्न:, धर्म,: अधर्म,: संस्कार: इति अष्ट गुणा: सन्ति।
सुखादीनां सर्वेषां उत्तरेषां कारणीभूता बुद्धि:। ज्ञानमिति तस्य नामन्तरम्। ज्ञानेन विशेषित: आत्मा जडेभ्य: भिद्यते। व्यवहार: शब्दप्रयोग:। स च अर्थज्ञानपूर्वक: भवति। अथवा, व्यवहार: प्रवृत्तिनिवृती: इति। प्रवृत्तौ "इदं मे इष्टम् " इति ज्ञानं कारणम्। निवृत्तौ च "इदं मम अनिष्टम्"इति ज्ञानं कारणम्। तथा च प्रवृत्तिनिवृत्तिसामान्यं प्रति ज्ञानं कारणं भवति।
ज्ञानं द्विविध: स्मरणात्मकं अनुभवात्मकं च इति। स्मरणं मनसा उत्पद्यते। अनुभावजन्य: संस्कार: स्मरण्स्य कारणम्। उदाहरणं आवर्षं पठिता: संस्काररूपेण छात्रेषु तिष्टन्ति। परीक्षायां प्रश्नपत्रिकानुसारेण केचन संस्कारा: उद्बुद्धा: भवन्ति। ये तद्बुद्धा: ते स्मरणं जनयन्ति। एवञ्च उद्बुद्ध: संस्कार: स्मरणकारणम्।
स्मृतिभिन्नं ज्ञानं अनुभव: । स च परोक्षापरोक्षभेदेन द्वि विध: । चक्षुरादिषडिन्द्रियै: जन्य: अनुभव: अपरोक्ष: इति। तेषु चक्षुरादीनि पञ्च इन्द्रियाणि बाह्यानि। मनस्त्वेकं आन्तरम्। बाह्येन्द्रियै: उत्पद्यमान: अनुभव: बाह्यप्रत्यक्षम्। मनसा उत्पद्यमान: अनुभव: आन्त्रप्रत्यक्षम्। सुख: दुख: ज्ञान: सह मन: आत्मानं गोचरयति। 'अहं सुखी, अहं दुखी इति। तद् इदं आन्तरप्रत्यक्षम्।
इन्द्रियातोरिक्तेन अनुमानेन उपमानेन शब्देन वा जयमान: अनुभव: परोक्षानुभव: । तद्, यथा अनुमानेन अनुमिति: उपमानेन उपमिति: शब्देन शाब्दबोध: इति। एवञ्च जन्य ज्ञानं आहत्य प्रत्यक्षं अनुमिति: उपमिति: शाब्दबोध: इतिचतुर्विधम्। तेषां जनकमिति चतुर्विधम्, जनकं करणमिति उच्यते।
अनुभव: द्विविधा विभज्यते। यथार्थ: अयथार्थश्च इति। यथावस्थितमेव अर्थं विषयीकुर्वन् अनुभव: यथार्थ: । यथा रज्जुं दृष्ट्वा 'इयं रज्जु:' इति ज्ञानम् यथार्थ: । अन्यं अन्यात्मना विषयीकुर्वन् अनुभव: अयथार्थ: । यथा रज्जुं दृष्ट्वा 'अयं सर्प: इति ज्ञानम्।
न्याय सिद्धान्ते ज्ञानाधिकरणम् आत्मा। ज्ञान सुख दुखादय: गुणा: यत्र भवन्ति स एव आत्मा। यथा गन्धाश्रय: पृथवी, तथा ज्ञानाद्याश्रय: आत्मा। स च आत्मा द्विविध: । जीवात्मा परमात्मा च। तयो: जीवात्मा शरीरेन्द्रियादिमान्, परमात्मनस्तु शरीरम् इन्द्रियं च नास्ति। पुण्य पापादिकं शरीरारम्भकम्। जीवस्य पुण्यं पापं वा अस्ति। अत: तत् फलत्वेन मनुष्यशरीरं, कीटशरीरं, वृक्षादि शरीरं वा भवति। ईश्वरस्य पुण्यं पापं वा नास्ति। तत्सत्वे तस्यापि सुखं दुखं वा स्यात्। अत एव ईश्वर: अशरीरं। जीवस्तु सशरीर:। परन्तु तथा ईश्वर: सर्वत्र व्याप्त: तथा प्रत्येकोऽपि जीवात्मा सर्वत्र व्याप्त:। स: देहस्य अन्तरपि अस्ति,बहिरपि अस्ति।अथापि तस्य ज्ञानं सुखं दुखं वा शरीरस्य अन्तरेव जायते। न बहि:। स च जीव: प्रति शरीरं भिन्न:।
विश्वनाथ: कारिकवल्यां एवमाह – **आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तुकम्।** इति। अत्र प्रतमचरण: आत्मस्वरूपमाह, द्वितीयचरण: आत्मनि प्रमाणं दर्शयति। चक्षुरादीन्द्रियेषु शरीरे च पर्स्परया ज्ञानसम्पादक: आत्मा। देहे आत्मन: अभावे इन्द्रियै: ज्ञानं नोत्पद्यते। यस्मिन् सति ज्ञानम् उत्पद्यते स: आत्मा इत्यर्थ:।
शरीरमेव ज्ञानस्य अधिकरणमस्तु। इन्द्रियेभ्य: ज्ञानोत्पादे तदेव कर्तु च भवतु। तत्राह विश्वनाथ: - **शरीरस्य च चैतन्यं मृतेषु व्यभिचारत:।** यदि शरीरस्य चैतन्यस्य ज्ञानस्वाश्रय:स्यात् तर्हि मृतशरीरेऽपि ज्ञानं स्यात्।तत्रापि इन्द्रियाणां सत्वात्। देहातिरिक्तात्माङ्गीकारे तु तत्रात्मन: अभावात् न ज्ञानोत्पत्ति: इति वक्तुं शक्यते। तस्मात् शरीरातिरिक्त: आत्माङ्गीकार्य:।
**'विज्ञानमानन्दं ब्रह्'** इति श्रुति: यद्यापि ज्ञानरूप: आत्मा इत्युद्धोषयति। तथापि तत्र विज्ञानशब्दस्य विज्ञानवान् इत्येवार्थ:। विज्ञानम् अस्यास्तीत्यर्थे 'अच्' प्रत्यये सति 'विज्ञानम्' इति शब्द: निष्पद्यते। तत् सहपठितस्य आनन्द शब्दस्य एवमेवार्थ: करणीय:। अन्यथा नित्यपुंलिङ्गस्य तस्य अपुंसकत्वम् अयुक्तं स्यात्। मतुबर्थे 'अच्' प्रत्यये सति विशेष्यनिघ्नो भवतीति ब्रह्मशब्दानुसारेण आनन्दशब्दस्य नपुंसकत्वम् उपपन्नं भवति अत एव 'य: सर्वज्ञ: स सर्ववित्' इति श्रुति: **'ब्रह्म ज्ञानवत्'** इत्याह, न तु ज्ञानं ब्रह्मेति।

तस्मात् नात्मनः ज्ञानात्मकत्वं युक्तम्। किन्तु ज्ञानाश्रयत्वम् एव युक्तम्।

जीवात्मनः परस्परं सुखदुखादि भेदेन भिन्नाः। मुक्तौ आपि जीवानां ब्रह्माभेदः नैव सम्पद्यते। भेदस्य नित्यत्वात्। येयं श्रुतिः**'ब्रह्मविद् ब्रह्मैव'** भवति। इत्याह तस्याः नाभेदे तात्पर्यम्। किन्तु निर्दुखत्वादिना ब्रह्मसाम्ये एव। अत एव **'निरञ्जनः परमं साम्यमुपैति'** इति मुक्तौ साम्यमेव श्रुयते। नाभेदः। अतः सम्पदाधिक्ये **'पुरोहितोऽयं राजा संवृत्तः'** इतिवत् **'ब्रह्मविद् ब्रह्मैव भवति'** इति अभेदश्रुतिः गौणी योज्या। तस्मात् जीवेश्वरयोः भेद एव, न तु कदापि अभेदः इति उच्यते।

हिन्दुधर्मस्य वैशेषिकविद्यालयः परमाणुप्रकृतिवादस्य स्वस्य ईश्वरवादी सिद्धन्तानां उपयोगेन आत्मनः गुणरहितचतुर्णां शाश्वतानामभौतिक पदार्थानां मध्ये अन्यतमः इति प्रतिपादयति, अन्ये त्रयः कालः दिक्, मानः च सन्ति। कालः, दिक्, च नित्यः विभुः इति । मनः नित्यः तथापि विभुः न भवति। मनस्तु शरीरान्तः सर्वत्र चलति।

आत्मनस्य ज्ञानं, वैशेषिकहिन्दुभ्यः अन्यत् इति। ज्ञानं यस्य "आनन्दः" अथवा "चेतना" मोक्षस्थितिः नास्ति यस्य वर्णनं वेदान्तयोगविद्यालये च करोति।

आत्मा इति वैशेषिक सूत्रानुसारं नवद्रव्येषु अन्यतमम्। एते द्रव्याःपदार्थवर्गः इति मन्यते। एते पदार्थाः यत् किमपि अस्ति तत् सर्वं यत् ज्ञातव्यं नामकरणं च भवति। उपविभागैः सह जगतः स्वरूपं जीवानां च अस्तित्वं च व्याख्यातुं प्रयतन्ते।

न्याय वैशेषिक च दर्शनविद्यालय अनुसारं नवद्रव्येषु एकं निर्दिशति। नित्यात्मनः सुखः दुखः भावनाः च सन्ति। सर्वे चैतन्यगुणाः क्षणिकाः। तथा च स्वयं पदार्थैः सह अभिज्ञानं न कर्तव्याः। आत्मानाख्यस्य द्रव्यस्य गुणाः दृश्यन्ते।

गौतमः प्रमेयसूचौ आत्मा अन्तर्भवति, अपितु प्रथमः प्रमेयः एव।आत्मा विरहा, सुखः, दुखः, बुद्धिः जनकम् इति ।कणादः अपि गौतमेन सह सहमतः आत्मा न प्रतीयते किन्तु अनुमियते इति। कणादःआत्मासत्त्वस्य प्रमाणार्थं अष्टानुमानचिह्नानि लिङ्गानि वा सूचिबद्धं करोति। प्रशस्तपादेन्यासूत्रे परिगणितानां लिङ्गानाम् आत्मनः गुणाः वर्णितः। बुद्धिः (ज्ञानः), सुख, दुखः, इच्छः, द्वेषः (विरक्ति), प्रयत्न (इच्छा), धर्मः (पुण्यः), अधर्मः (दोषः), संस्कारः (प्रवृत्तिः), सांख्यः परिमाणः, पृथक्त्व (विशिष्टता), संयोगः (सन्धि), विभागः (विच्छेदः) च। एतेभ्यः स्पष्टं भवति यत् प्रशस्तपादे विशेषगुणाः सामान्यगुणाः च अत्र समाविष्टाः भवति।

अन्नंभट्टः स्वस्य दीपिकायां आत्मनः परिमाणस्य विषयेचर्चां करोति। भारतीय दर्शनिक क्षेत्रेषु त्रयः मताः प्रचालिताः सन्ति। केचन दार्शनिकाः आत्मनः परिमाणेन परमाणुः इति मतं समर्थयन्ति। जैनः कथयति य आत्मा मध्यमप्रमाणस्य यत् शरीरस्य परिमाणम्। अन्नंभट्टः आत्मनः परमाणुपरिमाणस्य प्रथमंदर्शनं निराकुर्वन्ति। यत् आत्मा तदा प्रत्येकं समग्रशरीरेण सुखं दुखं वा न अनुभूयते इति स्थले। न च मध्यमप्रमाणस्य आत्मा स्वीकारः सम्भवति यतः तस्मिन् सति कृतनाशः अकृताभ्यगमः भविष्यति। एवं अन्ते आत्मा सर्वव्यापी इति मन्तव्यः।

मध्ययुगस्य आरभ्य पाश्चात्यदर्शने आत्मायाः अस्तित्वं स्वरूपं च शरीरेण सह तस्य सम्बन्धः च विवादितः आसीत् इत्यस्मै रेने देस्कर्ट्स, मनुष्यः शरीरस्य आत्मायश्च संयोगः आसीत्, प्रत्येकं परस्परं कार्यं कुर्वन् विशिष्टः पदार्थः आसीत; आत्मा मनसः युल्यम् आसीत्। बेन्डिक्ट् दे स्पिनोज़ इत् पाश्चात्य उक्तम् 'शरीरं आत्माच एकस्य वास्तविकतायाः पक्षद्वयं निर्मितवन्तौ। इमैनुएल् कान्ट् उक्तम् नष्कर्षंगतवान् यत् आत्मा तर्कद्वारा प्रदर्श्यः नासीत्, यद्यपि मनः अनिवार्यतयाआत्मा अस्ति इति निष्कर्षं प्राप्तुं अर्हति यतोहि नीतिशास्त्रस्य धर्मस्य च विकासाय एतादृशः निष्कर्षः आवश्यकः आसीत्। जेम्स् महोदयः उक्तम् आत्मा तथैव सर्वथा नासीत् अपितु केवलं मानसिकघटनानां संग्रहःएव आसीत।

तथा आत्मानः शरीरेण सह सम्बन्धस्य भिन्नाः अवधारणाः अभवत्, तथैवाअत्मा कदा अस्तित्वं प्राप्नोति, कदा यदि च म्रियते इति विषये अनेकाः विचाराः अभवत् प्राचीनग्रीक् प्रान्त्ययाः विविधाः आसन् कालान्तरेण विकसिताः आसन्। पय्थगोरसः उक्तवान् आत्मा दिव्यमूलः अस्ति, मृत्योः पूर्वं पश्चात् च अस्ति इति मन्यते ।प्लेटो, सुकरत् च आत्मायाः अमरत्वंस्वीकृतवन्तौ, अरस्तु तु आत्मायाः भागमात्रं बुद्धिः इति तत् गुणं मन्यते।प्रारम्भिकाः ख्रीष्टीयदर्शनिकः आत्मायाः अमरत्वस्य ग्रीक् अवधरणम् स्वीकृतवन्तः, आत्मानं ईश्वरेण निर्मितः, गर्भधारसमये शरीरे प्रविष्टः इति च चिन्तयन्ति।

## उपसंहर

अहं न्याय किरणवली, तर्क संग्रहः भारतीय दर्शनम्, वेदान्तग्रन्थः इति लेखनं पटित्वा तत्र विद्यमानांशान् ग्रहित्व अस्मिन् लेखने अलिखम्।

## उल्लेख


1. एस् दासगुप्त, योग दर्शन : पृ, 142-148
2. हिन्दुधर्मस्य दर्शन्क परिचयः पृ. 157
3. के के चक्रवर्ति न्याय द्वतवादी परम्परा, पृ. 8-10
4. बिमल कृष्ण मटिलाल , न्याय वैशेषिक दर्शन् पृ. 42-44
5. पतंजलि योगसूत्रः
6. द्लाल्. आर्, भारतस्य धर्माः
7. ब्रिटानिका, आत्मन हिन्दु दर्शन.
8. हिन्दु धर्म ईश्वरस्य विचारः पृ. 52 – 56
9. बी गुप्ता, भारतीय दर्शन कपरिचयः यथार्थः ज्ञान एव स्वतंत्रता दृष्टिकोण, पृ. 171 -189

International Journal of Sanskrit Research 2024; 10(1): 31-35



International Journal of Sanskrit Research
अनन्ता

**ISSN: 2394-7519**
IJSR 2024; 10(1): 31-35

www.anantaajournal.com
Received: 18-11-2023
Accepted: 25-12-2023

**Malini Ramanna**
Research Scholar, Srinivasa Yoga Samskrit Research Centre, Mukka, Suratkal, Mangaluru, Karnataka, India

**Corresponding Author:**
**Malini Ramanna**
Research Scholar, Srinivasa Yoga Samskrit Research Centre, Mukka, Suratkal, Mangaluru, Karnataka, India

# भारतीयज्ञानव्यवस्थायां भारतीयदर्शनस्य अवलोकनम्

**Malini Ramanna**

**DOI:** https://doi.org/10.22271/23947519.2024.v10.i1a.2284

## उपोद्घात:

भारतीयज्ञानव्यवस्थाया: उद्देश्यं समकालीन सामाजिक समस्यानां समाधानार्थं अग्रे संशोधनस्य समर्थनं, सुविधां च कर्तुं वर्तते। भारतीयज्ञानव्यवस्थाया: वैदिकसाहित्ये, वेदेषु, उपनिषदेषु च आधारितम् अस्ति। ऐ के एस् पाठ्यक्रमा: डिजिटल् शिक्षणमञ्चेषु समन्वयिता: भवितुम् अर्हन्ति। शिक्षाविदा: प्रशिक्षणार्थं अभिमुखीकरणार्थं च माड्युला: ऐ के एस् पाठ्यक्रमेषु कक्षाप्रदानस्य गुणवत्तां सुधारयितुं परिकल्पिता: भवेयु:।
भारतीयज्ञान प्रणाली सम्बद्धविषयेषु शिक्षकान् प्रशिक्षितुं विशेषशिक्षकप्रशिक्षणकेन्द्राणि स्थापितानि भविष्यन्ति। भारतस्य केन्द्रित संशोधनसञ्चालनार्थं भारतीय ऐतिहासिक संशोधनपरिषद:इति संस्थानां माध्यमेन संस्था: वैश्विकसहकार्यं प्राप्तुं शक्नुवन्ति। विभिन्नेषु उच्च विद्यालयेषु ऐ के एस् केन्द्राणां स्थापनायै प्रारम्भिक बीजवित्तपोषणं प्रदत्तं भविष्यति।
भारतीय ज्ञानप्रणालीषु ज्ञानं, विज्ञानं,जीवनदर्शनं,च सन्ति। ये अनुभवात्, अवलोकनेन, प्रयोगात्, विश्लेषणात् च विकसिता: सन्ति। प्रमाणिकरणस्य व्यवहारे एषा परम्परा अस्माकं शिक्षा, कला, प्रशासनं, न्याय:, स्वास्थ्यं, निर्माण:, वाणिज्यं च प्रभावित: अस्ति।
भारतीय शास्त्रियादी भाषा: प्रभाविता: अस्ति। ये पाठ्य मौखिक कला परम्पराभि: प्रसारिता: आसन्। प्राचीन भारतस्य ज्ञानं तथा, तस्य सफलता:, आव्हानानि च, शिक्षा, स्वास्थं ,पर्यावरणं तथा च वास्तवं जीवनस्य सर्वेषां पक्षानां विशिष्टानां भारतस्य भविष्यस्य आकांक्षाणां भाव: च अन्तर्भवति।
भारतीयव्यवस्था ऐतिहसिकविरासतां अतिरिक्तं आधुनिक क्रियाकलापानाम् विचाराप्रक्रियाणां च प्रभावं निरन्तरं अस्ति। अस्तित्वस्य सर्वेषां पक्षानम् परस्पर निर्भरताया: उपरि बलं ददति, समग्रजीवन दृष्टिकोणं च प्रस्तुतं करोति।भारते सक्रियरूपेण अध्ययनं, अभ्यासं च भवति तदतिरिक्तं एता: बहव: परम्परा: वैश्विकरूपेण अधिकप्रसिद्धा: भवन्ति। शिक्षाणस्य लक्ष्या उद्देश्यं छात्राणां कृते भारतीय पारम्परिक ज्ञानस्य अवधारणाभि: सह सुविधां दातुं ज्ञानव्यवस्थाया: महत्वं अवगन्तुं, तस्या: दैनन्दिन जीवने प्रयोक्तुं च इति स: स्पष्टीकरोति।
भारतीयज्ञानव्यवस्थानां छात्राणां कृते परिचय:, वैदिकशास्त्रस्य अवलोकनं, दर्शन:, चरित्रव्याप्ति: महत्त्वं च। स्वदेशीयज्ञानं, पारम्परिकज्ञानं या पाश्चात्यज्ञानं च शिक्षितं भविष्यति।मानविकविज्ञानयो: पारम्परिक ज्ञानयो: विषये केन्द्रितं भविष्यति। यत्र भाषा विज्ञानं, संख्यामापनं, गणित:, रसायनशास्त्रं, भौतिकशास्त्रं, कला, खगोलशास्त्रं, ज्योतिषशास्त्रं, शिल्प:, भारतीयव्यापार:, अभियांत्रिकी, प्रौद्योगिक च समाविष्टाः

भविष्यति। व्यावसायिकक्षेत्रे पारम्परिकज्ञानं समाविष्टं करिष्यति। यत्र नगरनियोजनं, वास्तुकलानिर्माणं, स्वास्थ्यकल्याणं, चिकित्सा: कृषि:, शासनं, लोकप्रशासनं च सन्ति। पाठ्यक्रमस्य परिणामेषु भारतीयज्ञानव्यावस्थाया: अवधारणाया: तस्य महत्त्वस्य अवलोकनं भविष्यति। पारम्परिक ज्ञानस्य रक्षणस्य आवश्यकताया: महत्त्वस्य प्रशंसाः भविष्यति।

ए आई सी टी ई इत्यनेन स्वस्य भारतीयज्ञानप्रणली विभागस्य कृते षट् केन्द्रितक्षेत्रेषु 15 शोधप्रस्तवानां चयनं कृतम् अस्ति।यत् स: अत्यधिकप्रतिसादं प्राप्तवान्। प्रस्तावा: अधिकतया ऐ ऐ टि इत्यस्मात् सन्ति। तथ च विषयेषु संस्कृतानुप्रयोग:, आधुनिकप्रयोगाय प्राचीन भारतीयग्रन्थानां अन्वेषणं च सन्ति।

एन् ई पी, 2020 भारतीयज्ञानचिन्तनस्य समृद्ध धरोहरं मार्गदर्शकसिद्धान्तरूपेण स्वीकुर्वन्ति। भारतस्य ज्ञानविरासतां पुन: अवलोकनस्य रुचि: शैक्षणिकक्षेत्रस्य अन्त: वैचारिक पुनरभिमुखीकरणस्य परिणाम: अस्ति वा इति, अमूर्तम् सकारात्मक सोपानम् अस्ति, एकमात्र: प्रश्न: च अस्ति। यत् शिक्षकाणां समर्थनार्थं संसाधन उपलब्ध: करणीयम् वा इति।

2020 तमस्य वर्षस्य राष्ट्रियशिक्षणनीत्या अतीव प्रासंगिकं बिन्दु: कृत: यत् छात्रा: भारतस्य गौरवेण सह उद्भवितव्या:, भारतीय आचार: मूलभूत व्यवस्थाय: एन् सी एफ् इत्यनेन तां दृष्टि: अग्रे सारयितुं प्रयत्न: कृत:, ये छात्रा: 18 प्रमुखा: विद्या: उदाहरणं वैदिकशास्त्र:, न्याय:, खगोलशास्त्र:, भाषविज्ञानम्, इति। तथा 64 कला: उदाहरणं अनुप्रयुक्त विज्ञानं इति । अध्ययनं कर्तुं चयनानि कुर्वन्ति। ते अर्जयितुं शक्नुवन्ति इति दृष्ट्वा श्रेय: ददति।भारतीयज्ञानस्य विशाल: अधिकतया धर्मनिरपेक्ष: न तु इति दृष्ट्वा एतत् स्वगतयोग्य: अस्ति ।

भविष्ये अपि अधिकं गन्तुं शक्यते । भारतीयज्ञान प्रणालीनां व्यापक शिरसाधीन विषयाणि केवलं तान्त्रिक शिक्षाणपर्यन्तं सीमिता: न भवितुम् अर्हन्ति। युरोपस्य विपरीतम् यत्र भारतीय बालानां कृते अस्माकं गृहे उत्पादितानां दार्शनिक परम्पराणां विषये दुर्लभतया एवा पाठ्यते, तत् वैशेषिक:, न्याय:, मिमांसक:, सांख्य:, भवति। विद्यालये दर्शनं अनिवार्य विषयं कृत्वा बालकान् विश्लेषणात्मक चिन्थनार्थं सम्यक् कर्तुं शक्नोति। पक्षे एक: तर्क: अस्ति। एतत् न केवलं तेषां विरासतां सह सम्बन्दं करिष्यति। अपितु संज्ञनत्मक विकासस्य उन्नयनार्थं कार्य करिष्यति।

भारतीय ज्ञानशास्त्रेषु रुचि: बहुकालात् किञ्चित् अधिकं समयं च गृह्णीयात् तत्र तस्य अवहेलना नास्ति।यत् अधिकांश: छात्रा: अद्यापि भारतीयविद्वत्ताया: योगदानस्य विषये अल्पं ज्ञानं कृत्वा अन्ते गच्छन्ति।

राष्ट्रीयशिक्षानीत्या भारतीयज्ञानप्राणलीषु बलं दत्तं कृत्वा विश्वविद्यालय अनुदान आयोगेन ऎ जि एस् इत्यस्य पि जि तथा यु जि पाठ्यक्रमेषु समावेशार्थं मार्गदर्शिका: प्रकाशिता:, येषु अनिवार्य: आधारभूत: पाठ्यक्रम: अपि अन्तर्भवति।

यू जी सी इत्यनेन ‘उच्चशिक्षापाठ्यक्रमेषु भारतीयज्ञान प्रणलीनां समावेशार्थं मार्गदर्शिकाया: मसौदा’ इति प्रकाशितम्।यस्मिन् अयोगेन टिप्पणी: प्रस्ताव: आमन्त्रिता:। यू जी सी इत्यनेन ‘भारतीयज्ञान प्रणालीविषये संस्थास्य प्रशिक्षणस्यमार्गदर्शिका:’ अपि प्रकाशिता:।

यू जी सी द्वार सूचनानुसारं मार्गदर्शिका: ‘अनुसन्धानस्य सामाजिकानुप्रयोगस्य च’ कृते ऎ के एस् सुचना: प्रसारयितुं केन्द्रीतभवन्ति।विद्यमानशैक्षिक रूपरेखाया: अन्त: ऎ के एस् सङ्घटनेन अग्रे अनुसन्धानं समाजिकानुप्रयोग:कर्तुं भारतीय ज्ञानप्रणालीनां संरक्षणं प्रासारणं च सहायकं भविष्यति। संस्था तदनुसारं पाठ्यक्रम: कार्यक्रमं च सज्जीकर्तुं शक्नुवन्ति। एतेन भारतस्य प्राचीनविरासतां शैक्षणिकपाठ्यक्रमेषु च समवेशयित्वा संरक्षितुं साहाय्यं भविष्यति” इति यू जी सी अवदत्।

बौद्ध:, कणाद: पाणिनी भारत ब्रह्मागुप्त: माधवायो: तवत्, उल्लेखं विना विद्यालय:, महाविद्यालयेभ्य: छात्रा: उद्भूता: सन्ति। प्राचीनस्य मध्ययुगस्य च जगत: भारतस्य विचारनेत्रुत्वं, गणित: वास्तुकला, प्रदर्शनकला, कल्याणं, भाषाविज्ञानं, अभितां तन्त्रिक: इत्यादिषु तस्या: योगदानं च आर्यभट्टस्य तस्य क्षणिकं विहाय अस्माकं पाठ्यक्रमेषु बहुधा अपेक्षितम् अस्ति।

भारतीयदर्शनस्य सर्वाणि प्रणाल्यानि वेदात् उत्पन्ननि इति विश्वास: अस्ति। तेन प्रकारेण वैदिककाले तार्किक: चिन्तपद्धति: प्रचलति इति मन्यते। प्राचीन भारतीयदर्शनं, धर्म:, मनोविज्ञान:, नीतिशास्त्र:, सामाजिकजीवनस्य इतिहास अध्ययनार्तं वैदिकसाहित्यं महत्त्वम् अस्ति। भारतीय जनानां आध्यात्मिक: संस्कृति: विकासस्य प्रमुख रूपम् आसीत्। संहिता, ब्राह्मणा:, आरण्यक:, उपनिषद: च चतुर्धा विभक्तम्।

भारतीयदार्शनिक परम्परासु मानवजीवनस्य उद्देश्य: धारणानां मानवव्यक्तित्व परिकल्पनाया: सह पर्याप्त: सम्बन्ध: अस्ति। भारतीयचिन्तनस्य सर्वे प्रमुखा: विद्यालया: सूचयन्ति यत् मानवजीवनस्य उद्देश्यं ‘आत्मस्य’,आत्मान: ईश्वरीयेन सह मिलनं प्रासुं भवति।

भारतीयदर्शनस्य अध्यायनेन व्यक्तित्वस्य समस्या निराकरणक्षमत वर्धते। अवधारणानां पारिभाषाणां, तर्कानाम्,समस्यनाम् च विश्लेषणे साहाय्यं करोति। विचार: विषय: च व्यवस्थितं, मूल्यप्रश्नानां निवारणं कर्तुं शक्यते। बृहत्मात्रायां सूचनाभ्य: यत् आवश्यकं तत् निष्कास्यितुं अस्माकं क्षमतायां योगदानं करोति। एकत: दृष्टिकोणानां

सूक्ष्मसूक्ष्मभेदानाम् भेदं कर्तुं अपरत: विरुद्धस्थानानां सामन्यभूमिं आविष्कर्तुं च साहाय्यं करोति।

दर्शने स्पष्टसूत्रनिर्माणस्य, उत्तमतर्कस्य, समुचित उदाहरणस्य च प्रशिक्षणं ददाति। तेन अस्माकं प्रत्याय सामर्थ्यं विकसितुं साहाय्यं करोति। स्वदृष्टिकोनानं निर्माणं रक्षणं च करोति। प्रतिस्पर्धात्मक: विकल्पेभ्य: स्वमतानि किमर्थं श्रेष्ठनि इति। एता: क्षमता: न केवलं दर्शने पठन लेखनद्वारा, अपितु कक्षाया: अन्त: बहिश्च दार्शनिक संवादद्वारा अपि विकसितुं शक्यन्ते।

अनेकेषु दर्शनशास्त्र पाठ्यक्रमेषु लेखनस्य गहनतया पाठनं भवति। नियमरूपेण नियुक्ता: बहव: दर्शनग्रन्था: साहित्यक निबन्धरूपेण उत्तमा: सन्ति। दर्शने व्याख्यात्मक लेखनं वैकल्पिक स्थानानं न्यायतया: उपरि बल दत्त्वा, तुलनात्मकलेखनं, छात्राणां स्वदृष्टिकोनस्थापन क्षमताया: विकासेन तर्कात्मकलेखनं, च उदाहरणानं विसृत चित्रणद्वारा वर्णनात्मकलेखनं च शिक्षयति।

अन्येषां विषयाणां अवगमनं क्षमताया: कृते दर्शनं अनिवार्यम् अस्ति। कस्यचित् विषयस्य बहव: महत्त्वपूर्णा: प्रश्न:,यथा तस्य अवधारणानां स्वरूपं, अन्यविषयै सह तस्य सम्बन्ध: च दार्शनिकप्रकृतय: भवन्ति।

भारतीयदर्शने मुख्यविषय: यथार्थतय: विज्ञानेन सह सम्बन्द: अस्ति।भारतीयदर्शने स्वतन्त्रं शाश्वतरूपेण स्थितम् अस्ति। तथा च अन्ये सर्वे अध्ययना: प्रेरणार्थे समर्थनाय च तस्य समीपं दृष्टवन्त:। भारतीयदर्शनं केवल अनुमानात्मकं न अपितु तस्य सैद्धान्तिक व्यावहारिकं च दृष्टिकोणं भवति।

दर्शनशास्त्रे त्रय: भाग: सन्ति। यथा ज्ञानशास्त्रस्यार्थ: ज्ञानसिद्धान्त:, अस्तित्वशास्त्रम् यस्यार्थ: वास्तविकतेया: सिद्धान्त:,अस्यविज्ञानम् यस्यार्थ: मूल्यानां सिद्धान्त: च इति। भारतीयदर्शनस्य व्यवस्ता: आस्तिकं नास्तिकं च इति। भारतीयदर्शनं अतीव प्राचीनपरम्परा अस्ति। वैदिकदर्शनेषु षड्दर्शनानि अधिकप्रासिद्धानि च सन्ति। एते न्याय:, वैशेषिक:, सांख्य:, योग:, मीमांसक:, वेदान्त: च इति।

भारतीयदर्शने अध्ययन माध्यमेन तत्त्वज्ञानं प्राप्तुं शक्यते। भारतीयदर्शनस्य आरम्भ: वेदेभ्य: भवति। वेदा: भारतीयधर्मदर्शनं, संस्कृति:, साहित्यादिनां मूलं भवन्ति। एतत् 'आस्तिकदर्शनम्' इति उच्यते। बौद्ध:, जैन: चार्वाक: च वेदा: न मन्यन्ते ते 'नास्तिक:' इति उच्यते।

भारतीयदर्शनस्य आरम्भ: वेदै: भवति यत्र प्रकृते: नियमा:, ब्रह्माण्डस्य उत्पत्ति:, तस्मिन् मनुष्यस्य स्थानं च विषये प्रश्ना: पृच्छ्यन्ते। वैदिकदृष्टौ सृष्टि: आदिसत्त्वस्य आत्मचेतने आरोप्यते। अनेन अनुभवजन्य घटनानां विविधताया:, सर्वेषां वस्तूनाम् उत्पत्ति: च अन्तर्निहितस्य एकस्य जीवस्य जिज्ञासा भवति। ब्रह्माण्डक्रम: कर्मणार्थ: कारणनियम: च इति उच्यते। प्रकृते त्रय: गुणा: (सत्व:, रज:, तम:) च इति गृह्यते।

वेदोपनिषद: सिद्धान्तानां व्याख्या: एतै: षड्भि: विद्यालयै: भिन्नभिन्नप्रमाणेन अतिव्याप्ति: कृता।ते "पाठ्यसम्बन्धं साझां कुर्वन्त: दार्शनिकदृष्टिकोन सङ्ग्रहं" प्रतिनिधियन्ति। ते हिन्दुधर्मस्य अन्त: दार्शनिकव्याख्यानां विविधताया: सहिष्णुतां अपि प्रतिबिम्बयन्ति तथा च एकमेव आधारं साझां कुर्वन्ति।

रुढिवादीविद्यालयानाम् हिन्दुदर्शनिका: ज्ञान विज्ञानस्य प्रणाल्या: विकासं कृत्वा वैदिकज्ञानस्य परिधिमध्ये तत्वमीमांसक, नीतशास्त्र:, मनोविज्ञान:, अर्थशास्त्र:, समाजिक शास्त्र: इत्यदीनां विषयाणां अन्वेषणं कृतवन्त:, तथैव व्याख्यानां विविधसङ्ग्रहं प्रस्तुतवन्त: "हिन्दुसंश्लेषणम्" इति कथ्यमानस्य प्रतिस्पर्धात्मका: दार्शनिकपरम्परा: आसन्।

प्राचीनभारते अनेका: अवैदिक: चिन्तपरम्परा: प्रफुल्लिता: अभवन्, तेषां स्वकीयानां दार्शनिक व्यास्थानां विकास: अभवत्। श्रामण आन्दोलने विविधा: परम्परा: अन्तर्भवन्ति। येषु वेदानां ब्रह्माणधर्म: न स्वीकृत: आसीत्। एतेषु अवैदिकविद्यालयेषु आत्मन:, परमाणुवाद:, नैतिकत:, भौतिकवाद:, नास्तिक:, अज्ञेयवाद:, स्वेच्छावाद:, तपस्वीवाद: पारिवारिकजीवन:, अहिंसा:, शाकाहार:, इति विषयाणां विविधविचारोत्पन्ना:। श्रामण: आन्दोलनात् उत्पन्न: उल्लेखनीया: दर्शनानि जैनधर्म:, प्रारम्भिक बौद्धधर्म:, चार्वाक:, च असीत्।

न्यायदर्शनम्, गौतमदर्शनमिति व्यवहार: अस्ति। गङ्गेशोपाध्याय: विद्वान् न्यायसूत्र व्याख्यानसरणि अक्षपादोपदिष्ट प्रामाणचतुष्टयस्य तत्वं, तत्वचिन्तामि ग्रन्थरत्नं निर्माय नव्यन्यायमार्गे प्रवर्तक प्रथमाचार्यरुपेण विराजते। तर्कविद्यालय: एकं दर्शनं यत् तर्कशास्त्रं ज्ञानविज्ञानं च केन्द्रितम् अस्ति। षड् विधं प्रमाणं स्वीकुर्वन्ति:। प्रत्यक्ष:, अनुमान:, उपमान: च प्रत्याय:, परिस्थितिभ्य: व्युत्पत्ति:। अप्रतीति:,नकारत्मक प्रमाणं तथा शब्द:, भूतकालस्य वर्तमानस्य वा विश्वासनीय विशेषज्ञस्य साक्षम्। न्याय: प्रत्यक्षवास्तविकता रूपं द्रव्य सिद्धान्तं च रक्षति।

वैशेषिक: न्यायविद्यालये सह निकटसम्बन्द्धा एषा परम्पर द्रव्यस्य आध्यात्मिकशास्त्रे, परमाणुसिद्धान्तस्य रक्षणं च केन्द्रीभूता आसीत् न्याय: केवलं द्वै प्रमाणौ स्वीकुर्वन्ति। प्र :, अनुमानं च।

पूर्व मीमांस: वेदस्य व्याख्या, भाषाविज्ञानं, वैदिकसंस्कारस्य व्याख्या च।

योग: सांख्यसदृशं विद्यालयं यत् व्यक्त्यिगत देवं स्वीकृत्य योगाभ्यासं प्रति केन्द्रितं भवति।

सांख्य: एक: दार्शनिकपरम्परा या विश्वं स्वतन्त्रौ वास्तविकताद्वयेन युक्तं मन्यते। पुरुष: तथा प्रकृति: च वर्णयति अस्य द्वव्द्वस्य आधारेण यस्मिन् पुरुष: प्रकृतिमलेभ्य: विवेचित: विच्छिन्न: च भवति। अस्मिन्

नास्तिकलेखकाः अपि च केचन ईश्वरवादी चिन्तकाः समविष्टाः सन्ति। तदनन्तरं भारतीयदर्शनस्यनधिकांशस्य आधारः च अस्ति।

जैनदर्शनं प्राचीनतमं भारतीयदर्शनं यत् शरीरं आत्मन पूर्णतय पृतक् इति मन्यन्ते।प्रथमजैनतीर्थंकर ऋषभनाथेन कोटिवर्षपूर्वं निरूपितानां प्राचीन श्रमणिपरम्पराणां संश्लेषणं, प्रचारं च महवीरस्य अन्तिमस्य 25 तमस्य च तीर्थकरस्य अनन्तरं जैनधर्मस्य पुनरुत्थानं पुनः स्थापना च अभवत्।जैनधर्मः आत्मनः व्यक्तिवादीस्वभावं, स्वनिर्णयानां व्यक्तिगतदायैत्वं च दृढतया समर्थयतिः आत्मनिर्भरता, व्यक्तिगतप्रायत्नाः एव स्वस्य मोक्षस्य उत्तर्दायी इति। जैनदर्शनानुसारं जगत् हिंसा पूर्णम् इति। अतः रत्नत्रयकस्य प्राप्तौ सर्वे प्रयत्नः निर्देशयेत्। यत् सम्यक् दर्शनं, सम्यक् ज्ञानां सम्यक्चरीत्रं च ये मुक्तिप्रास्यर्थं प्रमुखाः आवश्यकताः सन्ति।

बौद्धदर्शने अनेकाः परम्पराः निर्देश्यन्ते येषां अन्वेषणं सिद्धार्थगौतमस्य, शिक्षायाः आधारेण कर्तुं शक्यते।बौद्धधर्मः अन्यैः भारतीयव्यवस्थाभिः सह दार्शनिक दृष्टिकोणाः साझां करोति। यथा कर्मविषये विश्वासः कारणः कारणसम्बन्धः, संसारः इति। चकियपरलोकस्य पुनर्जन्मस्य च विषये विचाराः धर्मः नीतिशास्त्रस्य, कर्तव्यानां मूल्यानां च विषये विचार, सर्वेषां भौतिकवस्तूनाम् अनित्यः च शरीरं, आध्यात्मिक मुक्तिसंभवः । हिन्दु, जैनः दर्शने एकः प्रमुखः विचलनः अस्ति बौद्धधर्मस्य अनन्तर पक्षे शाश्वतात्मनः अस्वीकारः।

चार्वाकः भरतीय बौतिकवादस्य प्राचीनः विद्यालयः अस्ति।चार्वाकः प्रत्यक्षप्रतीर्तिं, अनुभववादः च ज्ञानस्य समुचितस्त्रोतऋपेण धारयति, दार्शनिकसंशयवादः आलिंगयति, संस्कारवादः अलौकिकवादः च अङ्गीकुर्वन्ति। प्राचीनभारते एषा लोकप्रियप्रत्यय व्यवस्था आसीत्।

चार्वाकस्य व्युत्पत्तिः अनिश्चितः अस्ति। भट्टाचार्यः व्याकरनशास्त्रस्य हेमचन्द्रस्य उदाहरणं करोति। 'चर्वण' इति मूलतः कार्वाक शब्दस्य व्युत्पन्नत्वम् "चार्वाकः आत्मानं चर्वति। बृहस्पतिः परम्परागतरूपेण चार्वाकस्य लोकायतदर्शनस्य वा संस्थापकः इति उच्यते यद्यपि केचन् विद्वांसः एतस्यविवादं कुर्वन्ति। प्रथमसहस्त्राब्दे हिन्दुसुधारकाले यदा गौतमबुद्धेन बौद्धधर्मस्य स्थापना कृता, जैनधर्मस्य पुनर्गठनं पार्श्वनाथेन कृतम्, तदा चार्वाकदर्शनस्य दस्तावेजीकरणम् कृत्वा उभयधर्मैः विरोधः कृतः चार्वाकस्य प्राथमिकसाहित्यस्य बहुभागः बृहस्पत्यसूत्राः लोकप्रियतायाः क्षीणतायाः कारणेन वा अन्यैः अज्ञातकारणैः वा नष्टाः अभवन्। अस्य शिक्षाः ऐतिहासिकगौण साहित्यात् यथा शास्त्रेषु, सुत्रेषु, भारतीय महाकाव्येषु च दृश्यते। तथा च गौतमबुद्धस्य संवादेषु जैन साहित्यस्य संकलिताः सन्ति। तथापि अत्र ग्रन्थः अस्ति, यः चार्वाकपरम्परायाः अन्तर्गतं भवितुम् अर्हति। यः संशयवादी दार्शनिकेन जयराशी भट्टेन लिखतः, यः तत्वोप्लव सिंहः इति प्रसिद्धः, यः अस्य विद्यालयस्य विषये सूचनां ददाति।

अस्माकं अतीतात् आकर्षणंकृत्वा भारतीयज्ञान व्यवस्थानां एकीकरणस्य मुख्यं उद्देश्यं अस्ति। यत् ज्ञानसञ्चारस्य अखण्डपरम्परया प्रतिनिधित्वं कृत्वा अद्वितीयदृष्टिकोणं प्रदातुं अस्माकं प्रचीन ज्ञानव्यवस्थानां उपयोगः भारतस्य वर्तमान, उदयमानः समाधानार्थं भवति।

ऐ के एस् वैज्ञानिकरीत्या विद्यालये उच्चशिक्षणपाठ्यक्रमेषु समाबेशः करणियं अस्ति। अस्मिन् आदिवासीज्ञानं तथा स्वदेशीयाः पारम्पारिकाः च शिक्षणमार्गाः समविष्टाः भविष्यन्ति। 'एक भारत श्रेष्ठ भारत' इत्यस्य अन्तर्गतम् अस्याः दिशी प्रति देशे 100 पर्यटनस्थलानां पहिचानं भविष्यति। यत्र शैक्षणिकसंस्थाः छात्राः एतेषां गन्तव्यस्थानां

तेषां इतिहासस्य, वैज्ञानिकयोगदानः परम्परास्य स्वदेशीयसाहित्यस्य च इति अध्ययनार्थं प्रेषयिष्यन्ति। यथा एतेषां क्षेत्राणां विषये तेषां ज्ञानं वर्धयितुं भागः।

अस्माकं विशालज्ञानः आकर्षणेन अस्माकं वर्तमान कालस्य आव्हानानां निवारणाय अग्रे संशोधनस्य प्रचारः, सक्षमी करणं च भविष्यति। मुख्यधाराशिक्षायां एतादृशेन एते पाठयक्रमाः अस्मकं ज्ञानव्यवस्थानां विरासतं पुनर्स्थापनं कुर्वन्तः प्रेरणादायकाः भविष्यति। पारम्परिक आधुनिक विचारयोः संपर्कः छात्राणां सांस्कृतिक आचारः विचारः अधिकतया अवगन्तुं, बौद्धिक क्षितिजं विस्तृतं कर्तुं, स्वस्य आत्मविश्वासं च वर्धयितुं साहयम् कर्तुं शक्नोति।

जुन्, 2022 तमे वर्षे आयोजितः प्रथमराष्ट्रियमुख्य सचिवसम्मेलने "भारतीयज्ञानव्यवस्थायाः शोधप्रसारणं विज्ञानं वैश्विकरूपेण स्वीकृतं भवति, समुचितं प्रोटोकाल् विकसितं" इति सुनिचितं कर्तुं निर्णयः कृतः।

सत्रे एकं मञ्चं प्रदर्शयति यत्र संस्थाः हितधारकाः च भारतीयज्ञानप्रणालीनां पुनर्स्थापनार्थं पुनः विकासाय च सहकार्यं शक्नुवन्ति। तथा च भारतीयज्ञानप्रणलीनां समकालीनज्ञानव्यवस्थाभिः सह सफलसमायोजनं पोषयितुं शक्नुवन्ति।

भारतीयज्ञानव्यवस्थायाः कार्यान्वयनेने न केवलं शिक्षायांक्रन्तिः भविष्यति अपितु भारतीयमानसः जीवनपद्धतिः च कायाकल्पः भविष्यति। मौलिकभारतीयचिन्तनं, ज्ञानं, परम्परां, कलां, कौशलं, शिल्पं, प्रबन्धनं च विभिन्नक्षेत्रेषु प्रविश्य भारते गहनं परिवर्तनं भविष्यति। ऐ के एस् क्षेत्रे आगामिषु दश्केषु 50 लक्षं तः अधिकाः कार्यस्थानानि सृज्यन्ते,येन भारतस्य आत्मसम्मानः, वर्धते इति अपेक्षा अस्ति।

भारतीयज्ञानव्यवस्थायाः माध्यमेन स्वं पुनः सजीवीकरणाय भारतीय यात्रा देशे महत्त्वपूर्णपरिवर्तनानि आनेतुं सज्जाः अस्ति। स्वस्य समृद्धं सांस्कृतिकविरासतां ज्ञानपरम्परां च आलिंग्य भारतं ब्रिटिश् शासनस्य विरासतां अतिक्रम्य

समृद्धराष्ट्रत्वेन स्वस्य योग्यं स्थानं पुनं प्रासुं शक्नोति। ऐ के एस् द्वार मार्गदर्शितस्य शिक्षाक्षेत्रस्य परिवर्तनम् अस्मिन् पुनरुत्थाने महत्त्वपूर्णः भूमिकां निर्वहति मानसिकस्वतन्त्रतायाः बौद्धिकशक्तिकरणस्य च नूतनयुगस्य आरम्भं करिष्यति। यथा यथा भारतं प्रगच्छति, तथा तथा तस्य प्राचीनप्रज्ञा व्यावहारिकप्रयोगं प्राप्स्यति, केवलं तस्य नागरिकानां अपितु वैश्विकसमुदायस्य अपि लाभः भविष्यति।

## उपसंहार

भारतीयज्ञानव्यावस्थायाः विविधधाराणां स्वरूप निर्माणे तस्य भूमिकायाः, भारतीयाध्यात्मस्य शास्त्राणां च विषये चर्चा कृत्वा, भारते महत्वपूर्णं एकिकरणशाक्तिरूपेण धर्मस्य अवधारणाम् अपि विषये अलिखम्। ज्ञानव्यवस्थायाः भारतस्यविविधानां दार्शनिकानां विश्वासव्यवस्थानां च रूपरेखाः, अत्रैव न्यायः वैशेषिकः, सांख्यः, मिमांसकः, योगः वेदान्तः च शास्त्रीय व्यवस्थाभ्यः आरभ्य बौद्धधर्मः, जैनधर्मः, नास्तीक विद्यालयाः च समविष्टाः मुनिपरम्पराः विषये एका अवलोकनं अलिखम्।

## उल्लेख


1. बी गुप्तः, भारतीय दर्शन क परिचयः यथार्थ, ज्ञान एव स्वतंत्रता प्रदृष्टिकोण, पृष्ठ 171 -189
2. राधकृष्णः, एस् भारतीय दर्शन्. पृ 39
3. न्याय-तर्कतीर्थः, तारानाथः तथा अमरेन्द्रतारकतीर्थः,
4. वि एन् शेषगिरि राव् वाचस्पतिमिश्रस्य अद्वैतवेदन्तस्य योगदानम् पृ. 83
5. राधकृष्णः, एस् भारतीय दर्शन्. पृ 39
6. प्राचीन भारतीय शिक्षाः ब्राह्मण एवं बौद्धः, मूकर्जी, राधकुमुदा
7. भारतीय दर्शन विश्वकोश, एच् जी नरहरी. बी पृष्ठ 78
8. तत्वचिन्तामणिः गङ्गेशोपाध्यायः, नगिन् जे ष, पृ 386
9. भारतीय दर्शन का हतिहास खण्ड 2, सुरेन्द्रनाथा दासगुप्तस्य
10. भट्टाचार्य, गोपिकामोहन।न्याय-वैशेशिक ईश्वरवाद
11. विश्वकोशः, ब्रिटनिक. हितिहास एवम् समाज
12. न्यायसिद्धान्तमुक्तावली – दिनकरी
13. राधाकृष्णः अक्स्फोर्ड विषवविद्यलायः
14. भरतीय दर्शन, विश्वकोश ब्रिटानिका,
15. शास्त्रीय भारतीय दर्शनं मोहन्ति जे एन.
16. संस्कृतग्रन्तेषु केन्द्रीकृत्य भारतीयज्ञानप्राणाल्याः, इण्डियन् एक्स्प्रेस्, 2023
17. ऐ के एस् प्रवर्तनस्य विषये सर्वकारस्य विश्वासघातस्य समाना भवति पृ, 25


## ग्रन्था


1. भारतीय दर्शन का एक इतिहास् सुरेन्द्रनाथ गुप्ता. 5
2. उदयनाचार्यप्रणीता, किरणावली न्यायकुसुमाञ्जलिः आवृत्तिः 199
3. गदाधरी, श्रीगदाधरभट्टाचार्यचक्रवर्त्ति कृत। आवृत्तिः 2014
4. दर्शनशास्त्रस्य अन्तर्जालविश्वकोशे.
5. न्याय -वैशेषिका दर्शनम् आमिता चटर्जी.
6. The oxford hand book, world ilosophy. A Journal of Culture and Philosophy, published by Prekshaa Pratishtana. ISBN. 978-0-19-532899-8. 2017
7. Nyaya praveshika (hindi book) Digital Library Indi 2012

International Journal of Sanskrit Research 2024; 10(1): 75-79




**ISSN: 2394-7519**
IJSR 2024; 10(1): 75-79

www.anantaajournal.com
Received: 01-10-2023
Accepted: 06-11-2023

**सस्मिता सेठी**
शोधच्छात्रा, महाराजा श्री रामचन्द्र भञ्जदेओ विश्वविद्यालय, वारिपदा, ओडिशा, भारत

**Corresponding Author:**
**सस्मिता सेठी**
शोधच्छात्रा, महाराजा श्री रामचन्द्र भञ्जदेओ विश्वविद्यालय, वारिपदा, ओडिशा, भारत

# तत्ववैशारदीकारः वाचस्पतिमिश्रः

## सस्मिता सेठी

**सारांश**
स्वस्वरुपप्रतिष्ठासाधनं योगदर्शनं न्याय-वैशेषिक-सांख्य-योग-मीमांसा-वेदान्तेति षड्षु दर्शनेषु मूर्धन्यं वरीवर्त्ति । तत्र योगदर्शनस्य प्रवर्त्तकाचार्यरुपेण महर्षिः पतञ्जलिः प्रथितयशा विद्यते । श्रीरामभद्रदीक्षितविरचिते पतञ्जलिचरिते प्रोक्तम्-
सूत्राणि योगशास्त्रे वैद्यकशास्त्रे च संहितामतुलाम् ।
कृत्वा पतञ्जलिमुनिः प्रचारयामास जगदिदं त्रातुम् इति ।।[1]
योगवार्तिके विज्ञानभिक्षुरपि ब्रवीति--
योगेन चित्तस्य पदेन वाचाम्
मलं शरीरस्य च वैद्यकेन ।
यो□पाकरोत्तं प्रवरं मुनीनां
पतञ्जलिं प्राञ्जलिरानतो□स्मि ।।
तत्र पतञ्जलिप्रणीतं योगदर्शनं समाधि-साधन-विभूति-कैवल्यनामकैः चतुर्भिपादैः विभक्तम् । तेषु प्रथमपादे योगस्य लक्षणं स्वरुपं,द्वितीयपादे योगसाधनभित्तिकसूत्राणि विन्यस्तानि । तृतीयपादे धारणा-ध्यान-समाधिप्रभृतिविवरणानि तथा चतुर्थपादे कैवल्यरुपमोक्षस्य विचारः समुपन्यस्तं विद्यते । दर्शने□स्मिन् षडविंशतितत्वानि सन्ति । यथा मूलप्रकृतिः, महत्, अहंकारः, शब्द-रुप-रस-गन्ध-स्पर्शेति पञ्चतन्मात्राणि, क्षिति-अप्-तेज-मरुत्-व्योमेति पञ्चमहाभूतानि, चक्षु-जिह्वा-नासिका-त्वक्-कर्णेति पञ्चज्ञानेन्द्रियाणि, वाक्-पाणि-पाद-पायु-उपस्थेति पञ्चकर्मेन्द्रियाणि, मनः, पुरुषःतथा ईश्वरः। एषु षडविंशतिपदार्थेषु ईश्वरं विहाय पञ्चविंशतितत्वानि सांख्यदर्शनान्तर्गतानि सन्ति । सांख्यनये त्रिविधदुः खनिवृत्तये पञ्चविंशतिपदार्थज्ञानमपरिहार्यम् । परन्तु योगदर्शनरीत्या षड्विंशतिपदार्थज्ञानं यद्यपि प्रयोजनं परन्तु चित्तवृत्तिनिरोधात् सस्वरुपावस्थानमेव निर्विशेषं लक्ष्यं जायते । यत्तु कैवल्यलाभ स्वरुपप्रतिष्ठारुपेण विनिश्चितम् । अत्र योगदर्शने पुरुष इत्युक्ते क्लेशकर्मविपाकाशयैः[1] सार्धं यः सम्बन्धशून्यः ।

**कूटशब्दाः** – योगः, तत्ववैशारदी, समाधिः, कैवल्यम् ।

## प्रस्तावना

"हिरण्यगर्भवचनं विचिन्त्येत्थम्" ।[3]
योगियाज्ञवल्क्ये वर्णितम्---हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः इति । तत्र हिरण्यगर्भविषये मनान्तराणि परिलक्ष्यते । कश्चित् वदति कपिलमुनिरेव हिरण्यगर्भः ।

केचन कथयन्ति सर्गादौ नाम सृष्टिप्रारम्भे ब्रह्मणा हिरण्यगर्भेण स्वाध्यायशीलान् ऋषीन् प्रति योगविद्या उपदिष्टा । अपरे कथयन्ति हिरण्यगर्भनामा कश्चित् ऋषिराषीत् । तेन आदौ योगविद्या सम्प्रसारिता । यद्यपि हिरण्यगर्भो योगशास्त्रस्य प्रथम प्रवक्ता तथापि योगसूत्रस्य प्रणेता भगवान् पतञ्जलिः योगशास्त्रस्य आदिमकर्तारुपेण विश्वविश्रुतः । योगसूत्रकारिणा पतञ्जलिना योगस्य लक्षणनिरुपणावसरे "योगश्चित्तवृत्तिनिरोध" इति सूत्रं प्रणीतम् । येन चित्तवृत्तिनिरोधैव योगपदेनावधातव्यः । भगवत्गीतायां योगशब्दस्य निर्वचनं बहुधा समाम्नातम्। यथा समत्वं[4], कर्मकौशलम्[5], निष्पृहता[6], समदर्शनप्रभृतिशब्दैः[7] योगस्य परिभाषा व्याख्याता विद्यते । भगवत्गीतायाम् एव परिलक्षते यत् –समग्राष्टादशाध्याये अन्तिमभागे---इति श्रीमद्भगवत्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे इति लक्ष्यते । यस्मात् भगवद्गीताशास्त्रं योगशास्त्ररुपेण प्रतिफलति ।

**योगस्य महत्वम् –**

कठोपनिषदि समाम्नातम्---
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ।[8]
एवं च मनुस्मृतौ---सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम् ।[9]

महाभारतस्य शान्तिपर्वणि अपि उल्लिखितम्--—नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं वलम् ।[10]तथा च शारीरिकभाष्ये उक्तम्-----
"अतएव सांख्येति नाम सम्यग्दर्शनात्मकत्वात् प्रचलति इत्युपरिष्टादभिधास्यते । तत्वदर्शनोपायो योग इति प्रसिद्धमेव" ।[11]
एवं च हठयोगप्रदीपिकायामुल्लिखितम्......

इन्द्रियाणां मनो नाथो मनोनाथस्तु मारुतः ।
मारुतस्य लयो नाथः स लयो नादमाश्रितः ।।[12]

एवं च याज्ञवल्क्यस्मृतौ उल्लिखितम्.......

यमश्च नियमश्चैव आसनञ्च तथैव च ।
प्राणायामस्तथा गार्गि प्रत्याहारश्च धारणा ।
ध्यानं समाधिरेतानि योगाङ्गानि वरानने ।।[13]

तथा हि ज्ञानसंकलिनीतन्त्रे...........

मथित्वा चतुरो वेदान् सर्वशास्त्राणि चैव हि ।
सारस्तु योगिभिः पीतस्तक्रं पिवन्ति पण्डिताः ।।[14]

श्रीमद्भागवते...........
योगमायामुपाश्रितः ।[15]

पुनश्च.............

ते योगमाययारब्धपारमेष्ठ्यमहोदयम् ।
प्रोचुः प्राञ्जलयो विप्राः प्रहृष्टाः क्षुभितत्वचः ।।[16]

एवं च शुक्लयजुर्वेदे.......

एष ते रुद्र भागः सह स्वस्राम्बिकया
तञ्जुषस्व...............।[17]

तत्र योगतत्वोपनिषदि योगसन्दर्भे वहवः विषयाः वर्णिताः विद्यन्ते । तत्र प्रामुख्येन योगस्य चातुर्विध्यं वर्णितम् ।यथा मन्त्रयोगः,लययोगः,हठयोगः,राजयोग इति ।[18] एतेषां चतुर्णां चतस्त्र अवस्थाः विद्यन्ते यथा आरम्भः,घटः,परिचयः,निष्पत्तिः ।[19] अत्र चतुर्षु योगेषु लययोगस्य स्वरुपमित्थमुटंकितम् ।

लययोगश्चितलयः कोटिशः परिकीर्त्तितः ।
गच्छन्-स्तिष्ठन्-स्वपन्-भुञ्जन्-ध्यायेन्निष्कलमीश्वरम् ।[20]

अस्यायमाभिप्राय यत्----चित्तस्य लयएव लययोग उच्यते । तादृशः लयः गच्छन्, उपविशन्,अवतिष्ठन्,स्वपन्,खादन्नपि विधातुं शक्यते । अर्थात् योगोपनिषद्दृष्टया सर्वावस्थायां निष्कलपरमात्मनः निरन्तरचिन्तनैव लययोगरुपेणान्वाख्यातः । तथा हि गीतायाम्------

स्थितप्रज्ञस्य का भाषा समाधिस्तस्य केशवः ।
स्थितधीः किं प्रभाषेत किमासीत ब्रजेत किम् ।।[21]

**वाचस्पतिमिश्रस्य कृतयः**

1. तत्ववैशारदी – योगसूत्रोपरि व्यासभाष्यटीका
2. तत्वकौमुदी – सांख्यकारिकटीका
3. न्यायसूचीनिबन्धः – न्यायसूत्रपाठस्तथासूत्रसंख्या इति द्वयं संकल्पितम्

4. न्यायवार्त्तिकतात्पर्यचीका
5. न्यायकणिका - मण्डनमिश्रकृतः विधिविवेकग्रन्थस्य टीका
6. तत्त्वविन्दुः – शब्दतत्वं शाब्दवोधश्च संकलितः
7. तत्वसमीक्षा – ब्रह्मसिद्धिः ग्रन्थस्य टीका
8. ब्रह्मसिद्धिः – वेदान्तविषयकग्रन्थः
9. भामतीग्रन्थः – ग्रन्थोऽयं अन्तिमसंकलनदृष्ट्या सर्वेषु मूर्धन्यत्वात् सर्वातिशायी मन्यते ।
10. पातञ्जलदर्शनम्
11. खण्डनोद्धारः
12. सांख्यतत्वकौमुदीसार
13. न्यायभाष्यम्
14. सांख्यकारिका
15. सांख्यतत्वकौमुदीसहिता
16. विवादचिन्तामणि
17. भामतीब्रह्मसूत्रशांकरभाष्यव्याख्या
18. द्वैतनिर्णयः
19. पातञ्जलयोगसूत्राणि
20. तीर्थचिन्तामणि
21. वेदान्तकल्पतरुः

**तत्ववैशारदीटीकाकारवाचस्पतिमिश्रस्य इतिवृत्तम्**

तत्ववैशारदीकारवाचस्पतिमिश्रः सर्वेषां दर्शनानां व्याख्याकाररुपेण महतीं प्रतिष्ठां लब्धवान् । स सर्वधर्मसमन्वयसिद्धान्ते लब्धप्रतिष्ठत्वात् केवलं परमेश्वरे भगवति सदाशिवे वलियसी भक्तिरासीत् । भामत्याः न्यायकणिकारम्भे च भवं प्रति, तात्पर्यटीकाया आदौ पीनाकिनं प्रति, तत्ववैशारद्याप्रारम्भे वृषकेतुं प्रति तेन प्रणिपातः समर्पितः । तथा च असाम्प्रदायिकत्वेन तेन विष्णुगणपतिप्रभृतिदेवेभ्यः प्रणामः प्रदत्ता । तत्र न्यायवार्त्तिकभूमिकायां विन्धेश्वरीप्रसादः वर्णयति यद् – दशमशताब्द्यां चौहानवंशे नृगनामको राजा आसीत्,तत्काले वाचस्पतिर्वभुवेति, ऐतिहासिकाः मतमिदं पुष्णान्ति ।[23] एतस्मात् प्रमाणात् नृगराजसमये नाम दशमशतक एव वाचस्पतिमिश्रस्य आविर्भाव ।ब्रह्मसूत्र-भामत्यां च नृगनरपतेः विवृतिः किञ्चिदुपलभ्यते । यथा नृग इति राज्ञः नाम । स च इतिहासप्रसिद्धरासीदिति । तत्र विक्रमशिलामहाविहारसंस्थापक मगध(विहार) गौडदेशाधिपति धर्मपालकराजा नृगनाम्ना प्रसिद्धेति । प्रज्ञानन्दस्वामी नृगराजविषये वहुकिमपि पर्यालोचितम् । वाचस्पतिमिश्रः गृहस्थरासीत् । तस्य पत्न्यार्नाम भामतीरासीत् । शारीरकभाष्यटीकायां नाम ब्रह्मसूत्रभाष्ये भामती नाम्ना एव टीका विहिता । वाचस्पतिमिश्रसम्बन्धे योगसूत्रव्याख्याकाराश्च प्रामाणिकत्वेन वाचस्पतिमिश्रस्याभिमतम् प्रतापादयन्ति ।विचारविमर्शदृष्ट्या प्रायतः वाचस्पतिमिश्रमतं समिचीनमिति ब्रुवन्ति ।

वाचस्पतिमिश्रस्य गुरोः त्रिलोचन नामा कश्चन विद्वान् मन्यते । स्वयं वाचस्पतिनाऽपि तात्पर्यटीकारम्भे त्रिलोचनगुरुरिति.......... विनिर्दिष्टम् । सः त्रिलोचनः न्यायशास्त्रज्ञ इति । राघवानन्दसरस्वती द्वारा पातञ्जलरहस्यनाम्नि एका संक्षिप्ताटीका लिखिता ।

केषांचित् विदुषां मते वाचस्पतिमिश्रस्य जन्मस्थानं मिथिला इ ति । तस्य प्रादुर्भाव नवमशतकाभ्यन्तरे इत्यनुमीयते । तेन आस्तिकदर्शनेषु वहूनि पुस्तकानि व्याख्यातानि सन्ति ।ब्रह्मसूत्र शाङ्करभाष्योपरि तत्कृता भामतीटीका शारीरिकभाष्यस्य अपूर्वतां विधते । सांख्यतत्वकौमुदी इत्याख्यभाष्यमपि सांख्यदर्शनस्याभूतपूर्वं रत्नं मन्यते ।तथैव मीमांसादर्शने न्यायाह्निकम्, तत्वविन्दुः विसर्ग इति कार्यद्वयं मण्डनमिश्रस्य विधिविवेकोपरि विधाय वाचस्पतिमिश्रः स्वस्य गौरवं वर्धापितवान् ।एवं रीत्या योगसूत्रस्य व्यासभाष्योपरि तत्ववैशारदी नाम्नी अनवद्यां टीकां स प्रज्ञापाटवेन महता यत्नेन प्रणिनाय । जीवनस्यान्तिमकाले तेन मीमांसादर्शनस्योपरि[24] तथ्यकदम्बं लिखितवान् ।न्यायमञ्जरीटीकायां[25] वाचस्पतिमिश्रेण गुरुः त्रिलोचनसम्बन्धे विवरणानि दत्तानि।

**योगभाष्यटीकासु तत्ववैशारदीटीकायाः महत्वम् ।**

वैदिकधर्म-संस्कृति-सभ्यता-रीतिनीति-पराम्परासु ब्रह्मविद्यायाः याथार्थ्य सर्वैरवगम्यते ।यतोऽहि दुःखनिवृत्तिनिमित्तं भूमानन्दलाभाय च यदा भौतिकविज्ञानं नैव सफलायते तदा पुरुषार्थसर्वस्वं योगदर्शनं नीतरां प्राथम्यं भजते । वैदिकषड्दर्शनेषु योगदर्शनस्य प्रामुख्यात् यमनियमाद्यौ अष्टौ अङ्गानि-विवेकख्याति-वैराग्य-अभ्यास-संयम-ईश्वरप्रणिधानप्रभृतिसाधनानि योगदर्शने प्रमुखस्तम्भरुपाणि विद्यन्ते । येन स्वस्वरुपप्रतिष्ठा कैवल्यलाभसहितं तीव्रस्मृतिलाभः,एकाग्रताप्राप्तिः, इन्द्रियाणामुपरि नियन्त्रणम्, अनागतहेयदुः खस्य विवरणं

तथा ईश्वरतत्वम्, गुरुतत्वम्, प्रणवरहस्यम् त्रिविधकर्म तथा बहूनां विषयाणां वहुत्वं संजायते ।

पातञ्जलयोगदर्शनोपरि "व्यासभाष्यं" प्रामाणिकभाष्यरुपेण सुप्रथितम् ।एतत् भाष्यं विना योगसूत्राणामभ्युगमः दुष्करः स्यात् ।अस्य भाष्यस्य रचयिता व्यासदेवः । एषः व्यासः पुराण-महापुराणप्रणेतुः व्यासात् स्वतन्त्रः नितरां भिन्नश्च ।व्यासभाष्यः निगुढतथ्यविमण्डितम् ।तस्य सुखवोधाय आचार्यः वाचस्पतिमिश्रेण महता परिश्रमेण तत्ववैशारदी इत्यस्य विरचनं कृतवान् ।तत्ववैशारदी टीकादृष्ट्या महती अनन्या तथा तत्वार्थ परिपूर्णा विद्यते ।योगसूत्रोपरि विज्ञानभिक्षुरपि योगवार्तिकमिति भाष्यं विरच्य महान् यशस्वी आसीत् इति । एतद् अतिरिच्य योगसूत्रोपरि वहूनि व्याख्यानानि विरचितानि सन्ति । तेषु वक्ष्यमाणरीत्या किञ्चित् विवरणं प्रस्तूयते ।

1. तत्र महाराज भोजविरचित – राजमार्तण्डः यत् भोजवृत्तिर्नाम्ना ज्ञायते ।
2. भावगणेशकृत वृत्तिः
3. रामानन्द यनिकृतः – मणिप्रभा
4. अनन्तपण्डितविहितः – योगचन्द्रिका
5. सदाशिवेन्द्र सरस्वति विहितः – योगसुधाकरः
6. नागोजिभट्टलिखित लघ्वी तथा वृहती वृतयः

एतासु सर्वासु योगसूत्रटीकासु भोजवृत्तिरेव सारल्यात् सुष्पष्टत्वात् लोकप्रिया प्रतिभाति ।

योगभाष्यं व्यासभाष्यं सांख्यप्रवचनभाष्यरुपेणापि वुधैः सुविदितम् । योगप्रज्ञासंभूत पदार्थसाक्षात्कारः कपिलेन विहितत्वात् योगशास्त्रं सांख्यदर्शनान्तर्गतमवधार्यते ।योगभाष्यसमुद्धरणे कृतभूरिपरिश्रमजयन्तभट्टः न्यायमञ्जरीग्रन्थे कथयति --- "अन्यत्राप्युक्तम् – योगाभासमनु विवर्धते रागाः, कोशलानि चेन्द्रियाणाम् इति" ।[25]

**उपसंहारः** - योगसमाधेरभ्यासात् स्वरुपावस्थानात् पूर्वं नीहार-धूमः-सूर्य-अग्नि-विद्युत्-स्फटिकप्रभृतीनां प्राकट्यमनुभूयते ।तथा च पञ्चमहाभूतानि वशीकृतानि भवन्ति ।

जरामृत्युः विनश्यति, शरीरं योगाग्निमयं जायते ।

भगवत्गीतायां योगतत्वान्तर्गताः केचनश्लोकाः नीचैः प्रदत्ताः ।

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ।।[26]
संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ।।
शनैः श्नैरुपरमेद् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्यं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ।।[27]

योगसूत्रस्य भाष्यस्य कतिपयपाठान्तरं योगवार्त्तिकग्रन्थे परिलक्ष्यते ।तथाहि योगसूत्रोपरि योगवार्त्तिककारस्य किञ्चित् विशिष्टं तथ्यं दृग्पथारुढं भवति ।2.12 सूत्रे विज्ञानभिक्षुणा लिखितम् – "स्वर्गिणां भारतवर्षभागस्य लीलामानुषविग्रह्रेण प्रयागादौ कर्मानुष्ठानस्य तत् फलस्य च श्रवणात्" ।

स्वामी हरिहरानन्दः योगसूत्रोपरि भास्वतीटीकां रचयामास ।एते विहारराज्यान्तर्गत मधूपुरनगरे जायते स्म ।केचन एष महानुभव वङ्गीय इति विवेचयन्ति ।वङ्गभाषायां एते महोदया सांख्ययोगं च आहृत्य भास्वतीटीकासहितमपरा टीकां कृतवान् । भास्वतीटीका नितरां संक्षिप्ता सुबोद्ध्या च ।अत्र न्यायशैल्या मतान्तरनिरसनपुरस्सरं अनेन भास्वतीटीका विशदीकृता ।

## परामृष्टग्रन्थाः


| क्र.सं | ग्रन्थः | प्रकाशनम् |
|---|---|---|
| 1 | Yeejleer³e oMe&ve | Ceesefleueeue Jeveejmeeroeme 41 ³eg.me. Jebieuees jes[, peJeenjveiej, efouueer 110007 |
| 2 | efnvoer Heele¡eue³eesieoMe&ve | Chowkhamba Krishnadas Academy, Oriental Publishers & Distributors, K. 37/118, Gopal Mandir Lane. |
| 3 | nþ³eesieÒeoerefHekeÀe | ®eewKecyee Deesefj³eCìeefue³ee efouueer, 110007 |
| 4 | DeÜwleefmeef×:, mJeeefceceOegmegovemejmJeleer | DeÜwleefmeef×:, mJeeefceceOegmegovemejmJeleer |
| 5 | ³eesiemet$eced | चौKecyee mebmke=Àle efmejerpe DeefHeÀme, yeejCeemeer, 2001 |
| 6 | ye´ïemet$e DeO³ee³eYee<³eced | ®eewKecyee mebmke=Àle efmejerpe DeefHeÀme, yeejCeemeer |
| 7 | APAROKSHANUBHUTI Self- realization of Sri Sankaracharya | Swami Mumukshanana President, Advaita Ashrama, Mayarati Pithoragarh, Himalayas from its Publication Department, Calcutta |
| 8 | Yoga asanas pranayama mudras kriyas | Vivekananda Kendra Praskashan Trust, 3, Singarachari Street Triplicane, Chennai-600005 |

| | | |
|---|---|---|
| 9 | Light on Yoga (Preface) B.K.S. Iyengar | Harper Collins Publishers 77-85 Fucham Palace Road London W68JB |
| 10 | Light on Pranayanama (Page-4) B.K.S. Iyengar | An imprint of Harper Collins Publishers, India Pvt. Ltd. 7/16 Ansari Road, New Delhi, 110002. |
| 11 | Patanjali Yoga Sutras A Commentary by Gurudev Sri Sri Ravi Shankar, Valume-1 | Sri Aurobindo Ashram Trust 1950, 1993. Published by Sri Aurobindo Ashram Publication Department, Pondicherry, 605002 |
| 12 | Sri Aurobindo Savitri | Sri Aurobindo Ashram Trust 1950, 1993. Published by Sri Aurobindo Ashram Publication Department, Pondicherry, 605002 |

**पादटीका**

1. रामभद्रदीक्षितप्रणीते पतञ्जलिचरितस्य प्रथम सर्गे क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः । यो.सू. 1.24
2. विष्णुपूराणे 2-13-44.
3. समत्वं योग उच्यते ।गीता 2.48
4. योगः कर्मसु कौशलम् । गीता 2.50
5. योगः निःस्पृहता स्मृता । गीता 6.12
6. आत्मौपम्येन सर्वत्र योगस्तु समदर्शनम् ।
7. श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ।। गीता 6.47
8. कठोपनिषद् (1.2.12)
9. मनुस्मृति (11.85)
10. महा. शान्ति(216.2)
11. शारीरक.(2.1.3)
12. हठयोगप्रदीपिका (4.29)
13. योगियाज्ञवल्क्य (1.45)
14. ज्ञानसंकलिनी तन्त्र 51
15. श्रीमद्भा.10.29.1
16. श्रीमद्भा.3.16.15
17. शुक्लयजु. 3.57
18. योग हि बहुधा वह्मन् भिद्यते व्यवहारतः ।मन्त्रयोगो लयश्चैव हठो□सौ राजयोगः -----योगतत्वोपनिद् -19
19. आरभ्यश्च घटश्चैव तथा परिचयः स्मृतः। निष्पत्तिश्चेत्यवस्था च सर्वत्र परिकीर्तिता। योगतत्वोपनिषद् -20।
20. योगतत्वपनिषद् 23
21. श्रीमद्भगवत्गीता-2.54
22. वेदान्तदर्शनेर इतिहास,भाग- 1,पृ.324
23. Potter KH, Bhattacharya S. Encyclopedia of Indian Philosophies, vol.vi, p. 454.
24. Encyclopedia of Indian Philosophies, vol. vi, H. G. Narahari, B. 2487 :22.1-2, P.78
25. न्यायमञ्जरी पृ. 87
26. गीता 6.13
27. गीता 6.24-25



International Journal of Sanskrit Research

अनन्ता

**ISSN: 2394-7519**
IJSR 2024; 10(1): 80-82

www.anantaajournal.com
Received: 06-10-2023
Accepted: 19-11-2023

**रामचरणदाशः**
अध्यक्षः रामचरणदाशः
रणपुरसंस्कृतमहाविद्यालयः
रणपुरम्, नयागड, ओडिशा, भारत

**Corresponding Author:**
**रामचरणदाशः**
अध्यक्षः रामचरणदाशः
रणपुरसंस्कृतमहाविद्यालयः
रणपुरम्, नयागड, ओडिशा, भारत

# प्राणायामविवेचनम्

**रामचरणदाशः**

**प्रस्तावना**

अस्माकं भारतीयानां कृते योगो भवति परमा सम्पत्तिः। अध्यात्मविद्यानां साररूपेण योगः पर्यवस्थितः। हिरण्यगर्भनामा कश्चित् योगस्यादिवक्ता[1] इति स्मृतिवाक्यात् प्रतीयते। श्रुतिप्रमाणमपि[2] द्रढयति तथ्यम्। यथोक्तम्- "सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते। हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ।। (या स्मृ०-२/३४९/६५) इति। हिरण्यगर्भाद् वसिष्ठः, ततो नारदः, ततो व्यासः योगज्ञानमवाप्तवानिति[3] तत्र सनकादयो योगीन्द्राः शुकादयो जीवन्मुक्ताः वर्णिताः। गोरक्षमार्कण्डयो योगस्य प्रधानानुष्ठातारौ।[4] भगवान् महेश्वर एव योगस्यादिवक्तेति नाथसंप्रदायाः प्रमाणयन्ति। शिवात् मत्सेन्द्रनाथः मत्सेन्द्रात्गोरक्षनाथ इति योगपरंपरा श्रूयते।[5]

लिंगपुराणे पाशुपताः शिष्यप्रशिष्यक्रमेण योगस्य वक्तारः स्मृताः।[6] कूर्मेऽपि भगवान्नारायण एव वक्तास्ति। योऽर्जूनाय इमं योगं प्रोवाच।[7] भगवताऽपि-

इमं विवस्वते योगं प्रोक्तवानहमव्ययम्।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्॥

---

[1] महा०भा०-१२/५४८/४५

[2]ऋक्- १०/१२१/१

[3] ब्रह्म०पु०-२/४/४५

[4] सांख्यतत्त्ववारिधौ,पृ-२०६

[5] नाथपरंपरा सिद्धसिद्धान्तपद्धत्याः भूमिकायाम्

[6] योगेश्वराणां चत्वारः शिष्याः प्रत्येकमव्ययाः।
शिष्यास्त्वेते महात्मानः सर्वावर्तेषु योगिनाम्॥
विमला ब्रह्मभूयिष्ठा ज्ञानयोगपरायणाः।
एते पाशुपताः सिद्धा भस्मोद्धूलितविग्रहाः॥
शिष्याः प्रशिष्याश्चैतेषां शतशोऽथ सहस्रशः।
प्राप्य पाशुपतं योगं रुद्रलोकाय संस्थिताः॥ लिंगपुराणे-७/३५-३६

[7] नारायणोऽपि भगवान् देवकीतनयो हरिः।
अर्जुनाय स्वयं साक्षाद् दत्तवानिदमुत्तमम्॥
यदाहं लब्धवान् रुद्राद् वामदेवानत्तमम्।
विशेषाद् गिरिशो भक्तिस्तस्मादारभ्य मेऽभवन्॥ कूर्मपुराणे-११/३५/३२-३३

एवं परंपराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परन्तपः ॥[8]

इत्यत्र विवस्वान् मनवे, मनुरिक्ष्वाकवे च योगं उक्तौ । एवमादित्यमारभ्य योगपरंपरा उक्ता ।

**विषयोपक्रमः**

शास्त्रे चतुर्विधाः योगा उक्ताः । ते मन्त्रयोगः लययोगः हठयोगाश्च त्रयो राजयोगस्य पुष्टिकारकाः सन्ति । यदुक्तं योगरहस्ये-

मन्त्रयोगो लयश्चापि हठयोगस्तथैव च ।
राजयोगोऽपि वै तत्र चतुर्द्धा संप्रकीर्तितः ॥[9]

एवं चतुर्विधेषु योगेषु पातञ्जलं भवति राजयोगविशिष्टशास्त्रम् । अस्य अष्टौ एव अंगानि स्वीकृतानि सन्ति । अष्टाङ्गेषु प्राणायामः चतुर्थाङ्गत्वेन स्वीकृतोऽस्ति । प्राणायाम इत्ययं शब्दः प्राण आयाम इत्यनयोः संयोगेन घटितोऽस्ति । प्राणस्य आयाम: प्राणायाम इति षष्ठीतत्पुरुषसमासेन समस्तोऽयं शब्दः। अधुना को नु प्राणः तद्विषये चिन्तनं क्रियते । प्राणविषये अथर्ववेदे ' उक्तमस्ति यत् प्राण एव समस्तसृष्टेराधारोऽस्ति । प्राणोऽयं जीवनदातृत्वेन अपि ज्ञायते । तैत्तिरीयोपनिषदि[10] अपि उक्तमस्ति यत् प्राणो हि भूतानामायुः । ब्रह्मस्वरूपं मत्वा प्राणोपासनाकारिणा पूर्णायुः प्राप्यते। प्राणविषये तस्यामेव उपनिषदि अन्यत्रापि उक्तमस्ति यत् प्राणादेव इमानि भूतानि जायन्ते। प्राणेनैव जातानि भूतानि जीवन्ति तथा अन्तिमावस्थायां प्रयाणं कुर्वन्तः अस्मिन्नेव प्राणे अभिसंविशन्ति। छान्दोग्योपनिषदि अपि उक्तमस्ति यत् सर्वाणि भूतानि प्राणादेव प्रादुर्भवन्ति प्राणे एव लीनाः भवन्ति। प्रश्नोपनिषदि अपि प्राणस्यालोचना विहितास्ति। सर्वेषामेव प्राणीनां जीवनस्य मूलमस्ति प्राणः । प्राणाः सन्ति इति वयं प्राणिनः। भारप्राणवतां सर्वेषां प्राणिनां संसारेऽस्मिन् अधिककालपर्यन्तम् अवस्थानस्य इच्छा भवति। अतः तैः प्राणशक्तेः सबलीकरणम् कर्तव्यम्। प्राणशक्तेः सबलीकरणस्य उपायोऽस्ति प्राणायामः । प्राण अर्थात् प्राणशक्तेः आयामः अर्थात् नियन्त्रणम् अथवा नियमनम् विस्तारश्च प्राणायामः । अर्थात् प्राणस्य नियन्त्रणपूर्वकतया विस्तारकरणमेव प्राणायामः । अर्थात् शरीराभ्यन्तरे सम्यक्तया वायोः विस्तारकरणमेव प्राणायामः । तद् विस्तारं शरीराभ्यन्तरे स्थितस्य वायोः बहिर्निर्गमन-गमननिरोधपूर्वकं क्रियते। प्राणायामस्य लक्षणत्वेन महर्षिपतञ्जलिना उक्तं यत् "तस्मिन् सति श्वासप्रश्वासयोगतिविच्छेदः प्राणायामः" ।[11] अर्थात् आसनप्रतिष्ठिते सति श्वास-प्रश्वासयो: या स्वाभाविकी गतिर्भवति तस्याः गतेः अभावः एव प्राणायामः।
प्राणस्य स्थिरता प्राणायामः । प्राणायामात्पूर्वं नाडीशुद्धिः विधीयते । पद्मासनस्थो योगी श्वासप्रश्वासयोः गतिविच्छेदपूर्वकः प्राणायामः कुर्यात् । सूक्ष्मार्थेन वायोर्नियन्त्रणं प्राणायामः । बाह्यस्य वायोराचमनं श्वासः। कोष्ठस्य वायोः निःसारणं प्रश्वासः । अनयोः क्रमभंगः प्राणायामः । मुख्यतया पूरक-कुम्भक-रेचकभेदेन त्रिविधः प्राणायामः उक्तः । श्वासपूर्वकं बाह्यवायुपूरणं पूरकः । श्वासप्रश्वासयोः स्तम्भवृत्तिः कुम्भकः । प्रश्वासपूर्वकं वायोः बहिर्निःसारणं रेचकः । त्रिविधप्राणायामस्य मानभेदमपि श्रूयते लिंगपुराणे ।[12] तल्लक्षणन्तु गोरक्षपद्धत्याम्-

बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत् ।
धारयित्वा यथाशक्ति भूयः सूर्येण रेचयेत् ॥[13] पुनः
दक्षिणे श्वासमाकृष्य पूरयेदुदरं शनैः ।
कुम्भयित्वा विधानेन पुनश्चन्द्रेण रेचयेत् ॥[14] इति

प्राणायामेन प्रकाशावरणं क्षीयते[15] चित्तैकाग्र्यञ्च सम्भवति । शरीरगतसर्वे मलाः व्याधयश्च नश्यन्ति । अत्र प्राणायामादीनामुपकारकत्वं चोक्तम्-

प्राणायामैर्दहेद्दोषं धारणाभिश्च किल्बिषम् ।
प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् ॥[16]

अस्य प्राणायामस्य भेदोपभेदेः बहुवर्णनमुपलभ्यते शास्त्रान्तरे । केवलं कुम्भकस्य अष्टौ भेदा उक्ताः[17] ।

**प्राणायामस्य प्रयोजनम्**

---

[8] गीता-४/१-२

[9] योगरहस्ये-११

[10] तै०उ०-३/२

[11] यो०द०-

[12] प्राणः स्वदेहजो वायुर्यमस्तस्य निरोधनम् ।
त्रिधा द्विजैर्यमः प्रोक्तो मन्दो मध्योत्तमस्तथा ॥
प्राणापाननिरोधस्तु प्राणायामः प्रकीर्तितः ।
प्राणायामस्य मानं तु मात्राद्वादशकं स्मृतम् ॥ लिं०पु०-८/७५-७६

[13] गोरक्षपद्धतिः-१/९६

[14] तत्र-१/९८

[15] यो०सू०-२/५२

[16] भाग०-३/२८/११

[17] सहितः सूर्यभेदश्च उअज्जयी शीतली तथा ।
भस्त्रिका भ्रामरी मूर्च्छा केवली चाष्टकुम्भकाः ॥
सहितो द्विविधः प्रोक्तः प्राणायामं समाचरेत् ।
सगर्भोबीजमुच्चार्य निगर्भो बीजवर्जितः ॥ घे०सं०-४५-४६

प्राणायामप्रयोजनीयताविषये मनुस्मृतौ उक्तमस्ति यत् प्राणायामात् इन्द्रियाणां दोषाः नष्टाः भवन्ति। हठयोगप्रदीपिकायामुक्तमस्ति [18] यत् प्राणायामात् चित्तं निश्चलं भवति । प्राणायामेन सर्वरोगक्षयो भवेत्। प्राणायामेन जठराग्निः प्रदीप्तो भवति येन भुक्तस्य आहारस्य परिपाकं सुन्दरतया भवति । व्यासभाष्ये अपि उक्तमस्ति यत् प्राणायामात् सर्वेषां मलानां विशुद्धिर्भवति तथा ज्ञानरूपदीपशिखा प्रदीप्ता भवति । श्वेताश्वतरोपनिषदि अपि उक्तमस्ति यत् योगाग्निमयशरीरवतो जनस्य रोगो जरा मृत्युश्च न भवन्ति । तत्रैव अन्यत्र अपि उक्तमस्ति यत् योगिजनस्य शरीरेण लघुत्वम्, आरोग्यत्वम्, अलोलुपत्वम्, शारीरिकवर्णे उज्चलता, स्वरमधुरता, शुभगन्धयुक्तता समवाप्यते तथा योगिजनस्य मूत्रपुरीषयोरल्पता भवति । अनेन योगाङ्गरूपेण स्थितस्य प्राणायामस्य उपादेयता प्रतिपादिता भवति। उपर्युक्तेषु प्राचीनग्रन्थेषु वार्णितैः वचनैरिदं प्रतिपादितं भवति यत् प्राणायामेन इन्द्रियदोषनाशः, चित्तचञ्चलतादूरीकरणम्, सर्वरोगक्षयः, ज्ञानोद्दीपनम्, जरामृत्युदूरीकरणम्, शारीरिकलघुतालाभः, अलोलुपतालाभः, शारीरिकदीप्तिलाभः, स्वरमधुरतालाभः, सर्वेषां मलानां निवृत्तिश्च भवति। कृतास्ति अनेन वक्षमाणरूपेण लाभो जायते ।

1. श्वासप्रक्रियायाः जीवनोपरि प्रभूतं महत्वं विद्यते। ये खलु दीर्घतया श्वसनं कुर्वन्ति ते खलु दीर्घजीविनः भवन्ति । अतः प्राणायामाभ्यासात् यदि वयमपि दीर्घतया श्वसनं कुर्मः तर्हि अस्माकमपि आयुषः वृद्धिः भवति वर्तमानापेक्षया।
2. कपालभातिप्राणायामाभ्यासात् महाप्रचीरापेशी-उपरि-पतितेन भारेण शिरागतरक्तभारं वर्द्धयति तथा हृदये रक्तः बलपूर्वकतया समागच्छति यस्मात् हृदये अभूतपूर्वलाभो भवति।
3. प्राणायामाभ्यासात् आहारपरिपाचकाङ्गोपरि प्रभावो भवति। अन्न-जल- परिपाचने व्यवहृतानाम् आमाशय-पेन्क्रियाज् नामङ्गानां व्यायामो भवति प्राणायामेन। यस्मात् शरीरे अन्न-जलादीनां परिपाचनं सुष्ठुतया भवति।
4. प्राणायामाभ्यासात् अन्तःस्त्राविग्रन्थीनां कार्य सन्तुलितं भवति। प्राणायामेन पीयूषग्रन्थि-पीनियल्यन्धिद्वयोः विकासः क्रियते तथा एन्डोक्राइन् ग्रन्थिसमूहैरपि प्रथमापेक्षया रक्ताधिक्यं समवाप्यते येन सः समूहोऽपि पूर्वापक्षया स्वस्थो भवति ।
5. प्राणायामाभ्यासात् स्नायुतन्त्रस्य विकारः न जायते। प्राणायामाभ्यासात् स्नायुतन्त्रेषु रक्तप्रवाह अधिकतया भूतत्वादेव तान् अङ्गान् स्वस्थरूपेण रक्षितुं शक्यते । भस्त्रिकाप्राणायामाभ्यासकाले श्वासगतिः शीघ्रतया भूतत्वात् प्रत्येकेषु सूक्ष्मशरीरावयवेषु मर्दनं भवति यस्य स्नायुतन्त्रोपरि शुभप्रभावो भवति ।
6. प्राणायामाभ्यासात् शरीरे उष्णतायाः वृद्धिर्भवति यस्मात् शरीरमारोग्ययुक्तं भवति । सामग्रिकतया कथिते सति इदं वक्तुं शक्यते यत् शरीरस्य स्नायुप्रणाली- ग्रन्थिसमूह परिपाचनप्रणाल्यादि- अनेकासु श्वासोपयोगी अङ्गसमूह-रक्तप्रवाहप्रणाली- प्राणायामस्य गभीरप्रभावो भवति। व्यवस्थासून केवलं शारीरिकस्वास्थ्योपरि अपितु मानसिकस्वास्थ्योपरि अपि प्राणायामस्य प्रभावो विद्यते।

## उपसंहार

योगिजनानां मतानुसारं प्राणायामेन शरीरस्थाः सर्वे मलाः प्रशुष्यन्ति। गोरक्षशतकानुसारेण प्राणायामेन पापनिवृत्तिर्भवति। हठयोगप्रदीपिकायाम् उक्तमस्ति प्राणस्य निश्चलावस्थायां चित्तमपि निश्चलं भवति। अनेन चेतसः एकाग्रता संसूच्यते। सिद्धयोगेऽपि उक्तमस्तियत् प्राणायामेन सर्वरोगक्षयो भवेत्। महर्षिपतञ्जलिना स्वकीयग्रन्थे उक्तमस्ति यत् प्राणायामेन प्रकाशस्य अर्थात् विवेकज्ञानस्य आवरणं नष्टं भवति यस्मात् मनसः धारणाशक्ते वृद्धिर्भवति ।

## सन्दर्भग्रन्थकुंजिका

1. पातञ्जल योगदर्शनम् ।
2. अथर्ववेदः ।
3. हठयोगप्रदीपिका ।
4. मनुस्मृति ।
5. तैत्तिरीयोपनिषत् ।
6. शिवसंहिता
7. गोरक्षसंहिता
8. घेरण्डसंहिता
9. शिवस्वरोदयः
10. योगचूडामण्युपनिषत्
11. योगकुण्डलिन्युपनिषत्
12. गर्भोपनिषत्
13. शरभोपनिषत्
14. श्रीमद्भागवतम्
15. श्रीमद्भगवद्गीता

[18] ह०प्र०-२/२

International Journal of Sanskrit Research 2024; 10(1): 83-85




ISSN: 2394-7519
IJSR 2024; 10(1): 83-85

www.anantaajournal.com
Received: 10-10-2023
Accepted: 22-11-2023

**उत्तमकुमारवेरा.**
शोधछात्रः विद्यासागर-विश्वविद्यालयस्य,
पश्चिम मेदिनीपुरम्, पश्चिमवङ्गः, भारत

**Corresponding Author:**
**उत्तमकुमारवेरा.**
शोधछात्रः विद्यासागर-विश्वविद्यालयस्य,
पश्चिम मेदिनीपुरम्, पश्चिमवङ्गः, भारत

# वर्तमानकाले आध्यात्मिकचिन्तने रमाचौधुरीविरचितस्य युगजीवनम् इति नाटकस्य माहात्म्यम्

**उत्तमकुमारवेरा.**

**सारांश**
शोधप्रबन्धेऽस्मिन् वर्तमानकाले आध्यात्मिकतायाः प्रयोजनीयताविषये आलोचना वर्तते। आधुनिकमानवाः विविधकारणैः अतीव जड़वादिनः सांसारिकजटिलतायां विरक्ताश्च। आध्यात्मिकचेतना हि तदमृतं येन मनुष्याः पुनर्जीवितुं शक्नुवन्ति। अस्मदीये देशे काले काले प्रमुखावताराः आगत्य मनुष्येभ्यः अमृतवाणीं प्रदत्तवन्तः। परन्तु तेषाम् आचरितमार्गः इदानीन्तनानां मनुष्याणां समीपे तावत् प्रभावं न धारयति। तत्र श्रीश्रीरामकृष्णदेवस्य सहजबोध्यं भक्तितत्त्वं मनुष्याणां परमोपकारं साधयिष्यति। रमाचौधुरी आधुनिकसंस्कृतसाहित्यस्य प्रख्याता कवयित्री। त्वया श्रीश्रीरामकृष्णदेवमुपरि युगजीवनमिति नाटकं विरचितम्। नाटकेऽस्मिन् रामकृष्णदेवस्य युगजीवनत्वं प्रकाशितं रामकृष्णस्य पूतकथामवलम्ब्य। शोधप्रबन्धेऽस्मिन् रामकृष्णदेवस्य अमृतोपदेशो जीवनमार्गश्च सुन्दरतया वर्णितौ वर्तेते। नाटकमिदं पर्यालोच्य यानि आध्यात्मिकानि तत्त्वानि परिलभ्यन्ते सविस्तरम् आलोच्यते। संकेतत्रयेण तदालोचितं वर्तते क. भगवान् अस्माकं परमात्मीयः नापरः ख. विग्रहधारी ईश्वरो हि परमब्रह्ममयः ग. जीवसेवा हि शिवसेवा

**कूटशब्दः** आध्यात्मिकता, अमृतम्, संसारः, भगवान्, आत्मा च।

## प्रस्तावना

आत्मानमधिकृत्य भवमिति अधि-उपसर्गपूर्वकात् आत्मन्-शब्दादुत्तरं ठञ्-प्रत्ययेन आध्यात्मिकमिति शब्दो निष्पद्यते। तत्र आध्यात्मिकं नाम आत्मकेन्द्रिकम्। अस्मद्देशे बहुप्राचीनकालतः मनुष्येषु आत्मकेन्द्रिकचिन्तनं दरीदृश्यते। येन आत्मज्ञानेन अस्माकं परा मुक्तिः सम्भवति। वैदिकशास्त्रे ऋषिभिः तस्य हि मार्गः निर्दिष्टः। वेदान्ते तथा उपनिषदि यस्य तत्त्वस्य पर्योलोचना भूयः भूयः परिदृश्यते "ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत्।"[1] काले काले मनुष्येषु तस्य तत्त्वस्य अनुभवः प्रकाशो वा नवरूपेण प्राप्यते। दर्शनशास्त्रेषु सम्प्रदायक्रमेण तत्तत्त्वस्य प्रकाशो विविधतया परिलक्ष्यते। पदार्थवादिन्यायवैशेषिकदिशा पदार्थानां हि तत्त्वज्ञानात् निःश्रेयस्प्राप्तिर्भवति।[2] सांख्ययोगे तत्र प्रकृति-पुरुषयोः तत्त्वज्ञानादपवर्गः प्राप्यते[3], मीमांसादर्शने तु वैदिककर्मणामानुष्ठानेन चित्तशुद्धिः तस्माच्च मुक्तिर्भवति इति।[4] वेदान्तनये तु केवलं ब्रह्मैव सद्वस्तु तज्ज्ञानात् हि मोक्षप्राप्तिर्भवति।[5] परन्तु तदात्मत्त्वस्य ज्ञानं संसारपीड़ितानां साधारणमनुष्याणां कृते प्रायः दुःसाध्यं वर्तते। मोक्षविषये तथा मुक्तिविषये साधारणमनुष्येषु तावत् चिन्तनं नास्ति यावत् स्वर्गप्राप्तिविषये परिलक्ष्यते। अतः इदानीन्तकालसापेक्षेण एव धर्मतत्त्वम् आध्यात्मिकतत्त्वं पर्यालोचितं दृश्यते। अस्मिन् भूप्रदेशे काले काले विभिन्नाः अवतारपुरुषाः आगत्य स्वीयकर्ममार्गेण मनुष्याणां कर्ममार्गः निर्दिष्टः। तदनुसारेण गमनं हि धर्मः इति महाभारतकारेण भगवता व्यासदेवेनोक्तम् "महाजनः येन गतः स पन्थाः"[6] इति। अपि च सनातनधर्मस्य आकरग्रन्थे तथा श्रीमद्भगद्गीतायामपि भगवता श्रीकृष्णेन मनुष्याणां कर्मविषये बहुधा वर्णितः –

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।
शरीरयात्रापि च ते न प्रसिध्येदकर्मणः॥[7]

परन्तु काले काले मनुष्याः संसारेऽस्मिन् अधिकतया व्यापृताः सन्ति। सांसारिकजटिलतायां ते अत्यन्ततया विरक्ताः नीतिविमुखाः स्वार्थपराः आध्यात्मिकचिन्तनरहिताः भवन्ति। अनेन तेषां मानसिका शान्तिः अपगता दृश्यते। तत्र मनुष्याः केवलं विपदि एव भगवन्तं स्मरन्ति। न तु अपरकाले। परन्तु स एव अस्माकं परमात्मीयः, सखा, पिता माता सर्वे एव। भगवतः तादृशस्वरूपज्ञाने चिन्तने अनुभवे एव अस्माकं मानसिकी शान्तिः मुक्तिश्च सम्भवतः।[8] तेन एव अस्माकं सर्वं भवति अतः त्वयि कर्मफलं समर्प्य सदा तेन सह गन्तव्यम् इति चिन्तनं तु अवतारवरिष्ठेन श्रीश्रीरामकृष्णपरमहंसदेवेन प्रकाशितः स्वीयकर्ममाध्यमेन।

तस्यैव परमपुरुषस्य रामकृष्णदेवस्य पूतजीवनमवलम्ब्य 'युगजीवनम्' इति नाटकं रचितवती वङ्गप्रदेशस्य नाट्यकर्त्री डक्टर.रमाचौधुरी महाशया। सा तु आधुनिकसंस्कृतसाहित्यजगतः ज्योतिष्कस्वरूपा। इयं कवयित्री शुभ्रांशु-मोहनवसुमहाभागस्य

सुयोग्या तनया अपि कविवरयतीन्द्र-विमलचौधुरीमहाशयस्य पत्नी आसीत्। वङ्गप्रदेशे नाट्यकर्त्रीषु एषा प्रथमा पुनः प्रथममहिलोपचार्येण अधिष्ठिता।। सा 'रवीन्द्रभारती' इति विश्वविद्यालये उपाचार्या आसीत्। विंशत्यधिकानि दृश्यकाव्यानि त्वया विरचितानि। तेषु युगजीवनमिति प्रख्यातं नाटकमेकम्। यत्र तु भगवतः श्रीश्रीरामकृष्णपरमहंसदेवस्य चरितकथा भगवच्चिन्तनञ्च वर्णिते वर्तेते। दशदृश्यात्मके नाटकेऽस्मिन् अवतारवरिष्ठस्य अवतारत्वं भगवद्भक्तिः मानवसेवा प्रभृतयः अनन्यकविप्रतिभया वर्णिताः वर्तन्ते। सार्विकतया पर्यालोचनया अस्मिन् नाटके अस्य कलियुगस्य संसारावद्धानां पीडितानां मार्गभ्रष्टाणां संसारविमुखानां मनुष्याणाञ्च मुक्तिमार्गः यावत् निर्दिष्टो वर्तते तावत् संकेतत्रयेण आलोच्यते शोधप्रबन्धेऽस्मिन्।

**भगवान् अस्माकं परमात्मीयः नापरः**

निराकारस्य ब्रह्मणः साधनायाम् अपारगाः मनुष्याः साकारस्य उपसनां प्रचलितवन्तः। वैदिककालतः प्राकृतिकवस्तूनाम् अलौलिकमाहात्म्यं वर्ण्यते। अधुनापि तत्परम्परा अनुसृता वर्तते। परन्तु मनुष्येषु भक्तेरभावात् ईश्वरस्य साधनापेक्षया तत्र वाह्यिकाडम्बरम् अधिकं दृश्यते। पुनश्च मूर्त्तिपूजाक्षेत्रे पूजनादनन्तरं तस्या हि मातृमूर्त्तेः अवमानना दृश्यते।। जगत्यस्मिन् भगवद्विग्रहः मृत्तिकया प्रस्तरेण वा निर्मीयते। तत्र अयं विग्रहः प्रस्तरमय इव परिगण्यते। परन्तु तद्विग्रहः अस्माकम् इष्टदेवस्यैव। स तु अत्यन्तम् आदरणीयः श्रद्धार्हश्च। परन्तु केनापि कारणेन तद्विग्रहे भग्ने सति तद्विग्रहं परिवृत्य अपरैको गृह्यते। भग्नविग्रहस्य अपवित्रताम् असमर्थतां कथयन्ति लोकाः। वयं तत्र विस्मरामः अयं विग्रहः अस्माकम् नेदिष्टस्य इष्टदेवस्यैव। नाटकेऽस्मिन् दृश्यते भवतारिणीमन्दिरात् केनापि पूजकेन श्रीगोविन्दविग्रहस्य आनयनकाले जलसिक्तत्वात् अलिन्दे सविग्रहं पतितः कश्चन पूजकः। येन भगवद्विग्रहस्य पदमेकं भग्नं जातम्। तत्र विषयेऽस्मिन् पण्डितानां मतं गृह्यते मथुरानाथादिभिः मन्दिरकर्तृपक्षैः। पण्डितानां मते एषः विग्रहः अशुद्धः पूजनायोग्यश्च सञ्जातः। मथुरानाथेन जिज्ञासिते सति गदाधरेण सयौक्तिकं तस्य हि श्रीविग्रहस्य पूजने विधानं प्रदत्तम्। तत्र तस्य युक्तिस्तावत् यथा अस्माकम् शरीरस्य तथा आत्मीयानां शरीरस्य कस्यचिदङ्गस्य केनापि कारणेन भग्ने सति ननु शरीरपरिवर्तनं तथा शरीरत्यागस्तु न भवति, औषधादिना सुस्थता भवति केवलम्[9], तथैव श्रीविग्रहस्य पदभग्नकारणात् विग्रहत्यागात् विग्रहे पादयोजनमेव श्रेय इति "ततः कथं भवान् भग्नपादं श्रीविग्रहं गङ्गाजले निक्षेप्तुम् उद्यतः? यदि भवान् भग्नपादान् आत्मीयबान्धवान् न त्वजेत् तदा कथं भग्नपाद-विग्रहं त्यक्ष्यति अवहेलाभरेण? किं स आत्मीय-बान्धवेभ्यो दीनतरो हीनतरः क्षुद्रतरः क्षीणतरो वा? ततः कथं स अवहेलनीयः परित्यजनीयो वा?"[10]

यथा कस्यचित् प्रियतमस्य वस्तुनः लाभाय अस्माकं प्रचेष्टा इच्छा धैर्योऽध्यावसायश्च च वर्तन्ते तथैव ईश्वरसाक्षात्कारप्राप्तये तावदेव प्रयत्नः धैर्यः अध्यावसायश्च प्रयोजनानि। गदाधरः सामान्यः पूजकः एव आसीत् परन्तु स्वीयभक्त्या आकुलाह्वानेन च मातुः कालिकायाः सजीवसत्ताम् अनुभूतवान्। भगवन्तं प्रति ईदृशी परमा भक्तिः हि अस्माकं मुक्तेः उपायः केवलम्।[11] नाटकेऽस्मिन् दृश्यते गदाधरः स्वीयोच्छिवष्टं भोजनं भोजयति मातरं भवतारिणीम्। अनेन गदाधरस्य परमा भक्ति दृश्यते "परमादरिणि जननि! ममोदरं पूर्णं जातं त्वत्प्रसादीकृतेन भोज्येन। अत एव मधुरमयि मातः! त्वमपि इदानीं स्वोदरं पूर्णं कुरु मत्प्रसादीकृतभोज्येन। हाः हाः हाः! अत्र तव निस्तारो नास्ति।"[12]

**विग्रहधारी ईश्वरो हि परमब्रह्ममयः**

दर्शनादिशास्त्रेषु ईश्वरः तु साकारब्रह्मरूपेण आलोचितः। स तु ब्रह्मलाभे प्रथमसोपानस्वरूपः। ईशोपनिषदि अस्य तत्त्वस्य कथनं दृश्यते "अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते"[13] इति। भाष्यकारेण शङ्कराचार्येण अस्य मन्त्रस्य इयं व्याख्याता "विद्यया देवताज्ञानेन अमृतं देवात्मभावम् अश्नुते प्राप्नोति"[14] एतादृशी व्याख्या कृता। वस्तुतः निरवयवस्य सदैव नित्यशुद्धचैतन्यस्वरूपस्य अखण्डरूपस्य परमब्रह्मणः उपासना साधारणमनुष्याणां कृते कष्टकरम् अतः ईश्वरो हि तत्र परमज्योतिस्वरूपः। नाटकेऽस्मिन् दृश्यते तोतापुरी नाम सिद्धतपस्वी ब्रह्मवादी गदाधरस्य अवतारत्वं श्रुत्वा आगतवान् तन्निकषा त्वं गदाधरम् अद्वैतब्रह्मवादे दीक्षितुम्। तदा गदाधरः मातुः कालिकायाः अनुमतिं याचते। इत्यनेन असौ तोतापुरी तपस्वी उपहसितवान्। अपि च अद्वैततत्त्वग्रहणे असौ गदाधरः समर्थो ना वेति ज्ञातुं रामकृष्णं ध्यानाय आदिशति। रामकृष्णदेवः केवलं मातुः कालिकायाः स्मरणेन दिवसत्रयम् अतिक्रान्तम् एकस्मिन् एव स्थाने समाधिलग्ने। समाधेरनन्तरमपि तन्मुखे कालिकायाः स्तुतिं श्रुत्वा तोतापुरी तपस्विनी विरक्ता जाता। सहसा तस्या अतीव उदरपीड़ा जाता, कष्टं सोढुम् असमर्था सा प्राणविसर्जनाय मध्यगङ्गे गता परन्तु दैवीमाहात्म्येन यावत् सा गता तावदेव जलम् शुष्कं जातम्। अनेन अलौकिककर्मणा देवीकालिकायाः अपारशक्तिविषये तस्याः ज्ञानचक्षुरुन्मिचिता। भगवत्कृपया पीड़ापि अपगता। तदा तस्याः भ्रान्तिः दूरीभूता। उच्यते तोतापुर्या "अहो आनन्दः, अहो आनन्दः, अहो आनन्दः! परमानन्दमयी सा। तस्या अनिन्द्यानन्दस्य विकाशो ह्ययं संसारः। ततः कुत्र शोकः, कुत्र शङ्का, कुत्र वा सङ्कटम्"[15] इति। अनन्तरं त्वयोक्तम् "सत्यं सत्यं सत्यमिदम्, जन्मनि मरणे, सुखे दुःखे, स्वर्गे मर्ते, बन्धे मोक्षे, जीवे जडे, ब्रह्मणि ब्रह्माण्डे च सा सा हि केवलम्।"[16] ततःपरं तोतापुरी गदाधरस्य हि शिष्यत्वं गृह्णाति सानन्देन।

**जीवसेवा हि शिवसेवा**

प्राचीनकालतः अद्यावधिः संसारः परिवारः वा इष्टसाधने वाधा इति मन्यते पण्डितैः। परन्तु श्रीश्रीरामकृष्णदेवेन संसारावद्धानां जीवानां हि मुक्तिमार्गः निर्दिष्टः स्वीयकर्मानुसारेण। असौ रामकृष्णदेवः गृही सपत्नीकश्च आसीत्। तथापि संसारे स्थित्वापि तेन ईश्वरसेवायाः उत्कर्षः मार्गः प्रदर्शितः। तत्तु जीवसेवामाध्यमेन शिवस्य तथा परमेश्वरस्य सेवा। इदानीन्तने आधुनिकसमाजेऽपि धनिदरिद्रयोः विभेदः वर्णगतवैषम्यं विभिन्नाः समस्याश्च परिलक्ष्यन्ते। सर्वे जीवाः समानाः जीवात्मा एव इति ते विस्मृतवन्तः। स्वीयभोगाय अपरात्मानां दुःखकारणं ते भवन्ति। अनेन न तस्य हि कर्मफलं तं बध्नाति इति ते न चिन्तयन्ति। उच्यते नाटके अस्मिन्

> दुःखभाजनमवज्ञाय न सुखी सुखभागभवेत्।
> तज्जीवनं भवेद् दग्धं दीर्घश्वासेन दुखिनः।।[17]

अपि च संसाराबद्धाः मनुष्याः इमं संसारं हि बन्धनकारणमिति मन्यन्ते। परन्तु संसारे स्थित्वापि मुक्तिः सम्भवति इति तत्त्वं श्रीश्रीरामकृष्णदेवेन प्रचारितम्।

> सन्न्यासी चानया रीत्या विनिःक्षिप्य गृहीणं गृहे।
> निर्जनं वनमासाद्य कथं शान्तिं प्रपत्स्यते।। इति[18]

नाटकेऽस्मिन् दृश्यते श्रीरामकृष्णदेवेन श्रीसारदामणिदेव्या सह महासाधना आरभ्यते। सुदीर्घं चतुर्वत्सरं पित्रालये स्वामिनः गदाधरस्य अपेक्षायां कालं यापयित्वा सारदादेवी स्वपित्रा साकं दक्षिणेश्वरमागता। रामकृष्णः स्वीयसाधनापथे एषा वाधा भविष्यति इति चिन्तयित्वा तां पृच्छति किं त्वया संसारे नेतुम् आगता? मातुः सारदामणेः उत्तरम् इष्टपथे ते सहायार्थम् आगताहम्। ततःपरं माता सारदामणिः स्वामिनं जिज्ञासितवती अहं तव का भवामि। रामकृष्णदेवः उक्तवान् त्वं मे जगज्जननीव माता। ततःपरं मातारं सारदां पूजितवान् सश्रद्धया "देवि! अर्चयामि त्वां देवीरूपां षोडशोपचारैः, त्वामुद्दिश्य भोगं निवेदयामि च।"[19] अनेन दिव्यदम्पतियुगलस्य आध्यात्मिकसंसारजीवनं प्रारभते। अपि च जीवमध्ये हि तेन महापुरुषेण शिवस्य अनुभवः कृतः। यत्तु सर्वदार्शनिकानां प्रतिपादितं तत्त्वम्, परन्तु अवतारवरिष्ठेन अतिव सहजतया तत्तत्त्वस्य प्रयोगः कृतः। उच्यते "जीवाः परमेश्वरस्य मूर्तप्रतिच्छविस्वरूपाः। ततः सर्वजीवे दया हि करणीया परमेश्वरकामिसाधकेन। किन्तु किन्तु किं मया कथितम् किं किम्? "जीवे दया" न न न अन्याय्यं मम वचनम्। न न जीवे दया। जीवे प्रेम, जीवे श्रद्धा, जीवे सेवा। जीवः स्वयं परमेश्वरः, को वा कीटानुकीटोऽहं तस्मै दयाप्रदर्शनाय? शिवज्ञानेन जीवपूजा करणीया एतदेव सकलागमानुसारम् एतदेव सकलदर्शनशास्त्रमाहात्म्यम्, एतदेव सकलधर्मतन्त्रमाधुर्यम्, एतदेव सकलनीतितत्त्वमाङ्गल्यञ्च।"[20] आजीवनं तेन महापुरुषेण जीवानां सेवा एव कृता। तस्य देहान्तात् परं तस्य पत्नी माता सारदा शिष्याश्च तत्प्रदर्शितं मार्गं हि गृहीतवन्तः। अद्यावधिः तत्परम्परा अनुसृता वर्तते।

शोधप्रबन्धेऽस्मिन् श्रीश्रीरामकृष्णदेवेन प्रदर्शितस्य आध्यात्मिकतत्त्वस्य आलोचनया प्राचीनकालतः अद्यावधिः परमेश्वरस्य प्राप्तेरुपायः सहजतया वर्णितो वर्तते। वस्तुतः अस्य जगतः सर्वेषु वस्तुषु भक्तिभावं श्रद्धा वा करणीया। भोज्य-

भोजकसम्बन्धातिरिक्तं हिंसा न करणीया। ईश्वरे भक्तिः जीवे च सेवा हि अस्माकं परमं कर्मः श्रेष्ठः धर्मश्च। अतः तस्मात् न भ्रष्टाः भवेयुः। उच्यते तैत्तिरियोपनिषदि "सत्यान्न प्रमदितव्यम्, धर्मान्न प्रमदितव्यम्, कुशलान्न प्रमदितव्यम्, भूतैर्न प्रमदितव्यम्।" येन आचरणेन हि दुःखार्णवे पतितानां संसारावद्धानां जीवनाम् मुक्तिर्सम्भवतीति शम्।

**उल्लेखपञ्जिः**

1. ईशोपनिषद् -1, ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत्। तेन त्यक्तेन भूञ्जीथा मा गृधः कस्यस्विद् धनम्।।
2. न्यायसूत्रम्-1.1.1,प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्त-अवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः।
3. सांख्यकारिका-2, तद्विपरतःश्रेयान् व्यक्ताव्यक्तज्ञ-विज्ञानात्।
4. अर्थसंग्रहः- 2, वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः।
5. Indian Philosophy, पृष्ठाङ्कः 34, श्लोकार्द्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः। ब्रह्म सत्यं जगन्मिथ्या जीव ब्रह्मैव नापरः।।
6. श्रीमद्भवद्गीता - 3.8
7. महाभारतस्य वनपर्व, 3.84, वेदाः विभिन्नाः स्मृतयो विभिन्नाः नासौ मुनिर्यस्य मतं न भिन्नम्। धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः।।
8. श्रीमद्भग्वद्गीता – 18.61-62, ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया।। तमेव शरणं गच्छ सर्वभावेन भारत। तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्।।
9. युगजीवनम् – प्रथमदृश्यम्, पृष्ठाङ्कः
10. युगजीवनम् – तत्रैव।
11. युगजीवनम् – द्वितीयदृश्यम् पृष्ठाङ्कः 14, मातः मातः मातः! आगच्छ आगच्छ आगच्छ कृपया त्वरितम्। हृदययन्त्रणया अहं मरणापन्नो जातः। असहनीया व्यथा मम चित्ते सञ्जाता, अहो न पारयामि सोढुम्।
12. युगजीवनम्, तृतीयदृश्यम्, पृष्ठाङ्कः 19.
13. ईशोपनिषद्, 11, विद्यां चाविद्याञ्च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते।।
14. ईशोपनिषद्, शङ्करभाष्यम्, पृष्ठाङ्कः 68.
15. युगजीवनम्, षष्ठदृश्यम्, पृष्ठाङ्कः 53.
16. युगजीवनम्, सप्तमदृश्यम्, पृष्ठाङ्कः 63.
17. युगजीवनम्, दशमदृश्यम्, 130 तमः श्लोकः
18. युगजीवनम्, दशमदृश्यम्, 131 तमः श्लोकः
19. युगजीवनम्, नवमदृश्यम्, पृष्ठाङ्कः 85.
20. युगजीवनम्, नवमदृश्यम्, तत्रैव।

**परिशीलितग्रन्थपञ्जिः**


1. व्यासदेवः। श्रीमद्भग्वद्गीता। सम्पादकः गीताशास्त्री जगदीशचन्द्रघोषः। कोलकाता; प्रेसिडेन्सी लाइब्रेरी, 1380 वङ्गाब्दः।
2. ईश्वरकृष्णः। सांख्यकारिक। सम्पादकः श्रीपूर्णचन्द्र-बेदान्तचुञ्चुः। कोलकाता; पश्चिमवङ्गराज्यपुस्तकपर्षत्, द्वितीयमूद्रणम्, 2007.
3. डक्टर.रमा चौधुरी। युगजीवनम्।
4. केशवमिश्रः। तर्कभाषा। सम्पादकः हरिपद-साँ। कोलकाता; वि.एन्.पाब्लिकेशन, प्रथमप्रकाशः, प्रकाशकालः 2021.
5. ईशोपनिषद्। सम्पादकः श्रीयदुपतित्रिपाठी। कोलकाता; वि.एन्.पाब्लिकेशन, अष्टममुद्रणम्, प्रकाशकालः 2013.
6. उपनिषद्। गोरक्षपुरः, गीताप्रेश, 2019.
7. लौगाक्षिभास्करः। अर्थसंग्रहः। सम्पादकः श्री अमर कुमार चट्टोपाध्यायः, कोलकाता, रामकृष्ण मिशन विवेकानन्द एडुकेशनल रिसार्च इनस्टिटिउट, पुनर्मुद्रणम्, 2019.

International Journal of Sanskrit Research 2024; 10(1): 86-89


International Journal of Sanskrit Research

अनन्ता

**ISSN: 2394-7519**
IJSR 2024; 10(1): 86-89

www.anantaajournal.com
Received: 25-10-2023
Accepted: 29-11-2023

**रामचरणदाशः**
अध्यक्षः,
रणपुरसंस्कृतमहाविद्यालयः,
रणपुरम्, नयागड, ओडिशा,
भारत

**Corresponding Author:**
**रामचरणदाशः**
अध्यक्षः,
रणपुरसंस्कृतमहाविद्यालयः,
रणपुरम्, नयागड, ओडिशा,
भारत

# अष्टांगयोगे ध्यानस्वरूपम्

**रामचरणदाशः**

**सारांश**
योगो भवति मानवस्य परमावश्यकः । योगं विना सांप्रतिके समाजे मनुष्याणां जीवनं दुष्करम् । तथा चोक्तं भगवता-'योगो भवति दुःखहा'[1] इत्यत्र योगः दुःखनाशकर्तुमात्मसाक्षात्कारकर्तुं च सर्वसमर्थ इति निःसन्देहः । ये सर्वदा योगसाधने प्रवृतास्ते स्वकीयजीवने निरोगाः भविष्यजीवने च नित्यसुखप्राप्तुं योग्या इति भारतीयानां मनीषिणां प्रेयवचनम् । ननु योगस्य अष्टौ एव अंगानि निरूपितानि तथापि तेषु ध्यानरूपांगस्य किं विशेषावश्यकता ? किंच तस्य फलमिति चेत् शोधनिबन्धस्य प्रमुखो विषयः ।

**कूटशब्दाः** ध्यानम्, अष्टांगानि, योगः, आत्मसाक्षात्कारः, स्थूलं, सूक्ष्मं, ज्योतिः

## प्रस्तावना

"ध्यै"धातोः ल्युट्प्रत्यययोगेन 'ध्यान'शब्दः निष्पद्यते। निरवच्छिन्नाभावना ध्यानमिति वक्तुं शक्यते। मनुष्यस्य व्यावहारिकजीवने आध्यात्मिकजीवने च ध्यानस्य महती आवश्यकता वर्तते । ध्यानपूर्वकं सम्पादितं कर्म आशानुरूपं फलं प्रसूते। तद्विपरीतरीत्या साधितं कर्म न केवलमिष्टं फलं जनयति अपितु कदाचित्महतोऽनर्थस्य कारणमपि भवतीति सर्वविदितम्। सर्वैरपि भारतीयदर्शनसम्प्रदायैः ध्यानस्य उपयोगिता बहुशोऽङ्गीकृता। न केवलं भारतीयदर्शनेषु अपितु विश्वस्य अन्येषु आध्यात्मिकसंप्रदायेषु अपि ध्यानं महत्स्थानमधिकरोति । ग्रीक्-ख्रीष्टियान्-यहूदी-चीनादिषु आध्यात्मिकसंप्रदायेषु ध्यानस्य महान् आदरो दरीदृश्यते। वस्तुतः मार्गः कोऽपि भवतु नाम ध्यानं विना आत्मसाक्षात्कारः मोक्षो वा न सम्भवतीति निश्चितम्। तस्मादुच्यते विद्यारण्यमुनिना पञ्चदश्याम्-

यथागाधनिधेर्लब्धौ नोपायः खननं विना।
मल्लाभेऽपि तथास्वात्मचिन्तामुक्त्वा न चापरः ॥[2]

यथाभूमिगतस्य निधेः लाभाय खननमेव उपायः, खननं विना यथा तद्धनमुपायान्तरेण नैव प्राप्तुं शक्येत तथैव ध्यानाभ्यासं विना आत्मसाक्षात्कारस्य उपायान्तरं नास्ति ।

---

[1] गीता-६/१७

[2] पञ्चदशी-९/१५३

**ध्यानलक्षणम्**

निरवच्छिन्ना भावना ध्यानमिति पूर्वमुक्तम् ।[3] मण्डलब्राह्मणोपनिषदि उच्यते- 'सर्वशरीरेषु चैतन्यैकतानता ध्यानम्' । योगसूत्रानुसारेण- "तत्र प्रत्ययेकतानता ध्यानम्"[4]। प्रत्ययस्य नाम चैतन्यस्य एकतानता नाम निरवच्छिन्नता एव ध्यानम्। यदा इन्द्रियाणां कार्यान्तराव्यापृतित्वात् चैतन्यस्य विभाजनं न भवति अपितु एकस्याः भावनायाः निरन्तरप्रवाहः भवति सा अवस्था ध्यानमित्युच्यते। योगशास्त्रे ध्यानस्य महत्प्राधान्यं दृश्यते। अष्टाङ्गयोगस्य अष्टानामङ्गानां मध्ये ध्यानं सप्तमम्। तानि अष्टौ एवाङ्गानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः।[5] अर्थात् यमनियमासनप्राणायामप्रत्याहारधारणानामभ्यासात्परमेव ध्यानस्याभ्यसनं क्रियेत। तत्र यमाः पञ्च। अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाभिधाः ।[6] नियमाश्चपञ्च। शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि।[7] स्थिरसुखमासनम्।[8] श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः।[9] स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकारः इवेन्द्रियाणां प्रत्याहारः।[10] देशबन्धश्चित्तस्यधारणा।[11] ध्यानमुक्तम् । तदेवार्थमात्रनिर्भासं स्वरूपशून्यमेव समाधिः।[12] एतेषां धारणापर्यन्तं योगाङ्गानामनुष्ठानात्पश्चादेव ध्यानस्य अनुष्ठानं भवति।

**ध्यानाभ्यासस्य स्थानम्**

ध्यानाभ्यासार्थमनुकूलस्य स्थानस्य महती आवश्यकता वर्तते। यत्र कुत्रापि ध्यानं न सम्भवति। ध्यानार्थं स्थानचयने महान् यत्नः करणीयः। ध्यानार्थमुद्दिष्टस्य स्थानस्य विशेषलक्षणानि भवन्ति। प्रथमतः एतत्स्थानं पवित्रं स्यात्। अशुचौ देशे ध्यानं न कर्तव्यम्। भूमिः समतला स्यात्। तत्र लघुदृषदः वालुकाः वा न स्युः। तत्र तदन्तिके वा बह्निः न स्यात्। तत्पार्श्वे जलाश्रयादिः न स्यात्, येन जनानां समागमात्कोलाहलः भवेत्। ध्यानस्थानं सर्वथा शान्तं शब्दरहितं स्यात्। तत्र दृश्यं चक्षुषोः अनुकूलं स्यात्, न च चक्षुष्पीडनकारि किञ्चित्दृश्यं तत्र स्यात्। एवं निर्जनेषु गुहादिषु ध्यानं कर्तव्यम्। तदुक्तं श्वेताश्वेतरे-

समे शुचौ शर्कराबह्निबालुकाविवर्जिते शब्दजलाश्रयादिभिः।
मनोऽनुकूले नतु चक्षुःपीडने गुहानिवाताश्रयणे प्रयोजयेत्॥[13]

गीतानुसारेण ध्यानार्थमुद्दिष्टं स्थानं नात्युच्छ्रितं नातिनीचं स्यात्। अनावृतायां भूमौ च ध्यानं न करणीयम् । अपितु चैलासनम् अजिनासनं कुशासनं वा भूमौ प्रसार्य तदुपर्युपविश्य ध्यानमभ्यसनीयम्। तथा चोक्तम्-

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः
नाप्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥[14]

**उपवेशनविधिः**

योगासनस्थः एवं योगी ध्यानम् अभ्यसेत्। ध्यानार्थं पद्मासनसुखासनवत् खकरमासनं युक्तम्। यतः ध्यानाभ्याससमये योगिनः कायशिरोग्रीवाः समरेखावस्थिताःस्युः। तदुक्तंगीतासु-

उपविश्यासने युज्याद्योगमात्मविशुद्धये ।
समं कायशिरोग्रीवं धारयन्नचलं स्थिरम् ॥[15]

ध्यानावस्थायां योगिनः नयने निमीलिते भवितुमर्हतः अथवा तस्य दृष्टिः नासिकाग्रवर्तिनी स्यात्। योगी इतस्ततः दृष्टिं न प्रक्षिपेत्। तदुक्तम्- समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥[16] ध्यानस्य प्रारम्भोऽपि विधिवत्करणीयः। ध्यानाभ्यसनात्प्राक् देवस्य सवितुः स्मरणं कर्तव्यम्। तदनन्तरमेवध्यानं प्रारब्धव्यम्। श्वेताश्वतरोपनिषदि अस्य विशदं विवरणं प्राप्यते ।

**ध्यानभेदाः**

ध्यानं त्रिविधं स्थूलध्यानं, ज्योतिर्ध्यानं, सूक्ष्मध्यानंच। सर्वादौ स्थूलध्यानमुच्यते ।

---

[3] उपनिषत्संग्रहः,दिल्ली १९९६

[4] यो.सू.३/२

[5] यो.सू.२/२९

[6] तत्र-२/३०

[7] तत्र-२/३२

[8] तात्र-४६

[9] तत्र-२/४६

[10] तत्र-२/५४

[11] तत्र-३/१

[12] तत्र-३/३

[13] श्वेताश्वेते-२/१०

[14] गीता-६/११

[15] गीता-६/१२

[16] तत्र-६/१३

### १. स्थूलध्यानम्

स्थूलध्यानं मूर्तिमयं भवति। कस्मिन् अपि स्थूलेवस्तूनि चित्रमाधाय तस्य एवं निरवच्छिन्नं चिन्तनं क्रियते। विष्णुशिवादीनां देवानां सरस्वतीदुर्गादीनां देवीनाम् अथवा हनुमदादीनामन्येषाम् इष्टदेवानां ध्यानं कर्तुं शक्यते। ध्यानसमये इष्टदेवानां वपुषां वैशिष्ट्यानि तत्संपृक्तानि अन्यानि तत्त्वानि ध्यातुं च युज्यन्ते। स्थूलध्यानेन केवलमीष्टदेवानाम् अपितु कस्यापि स्थूलवस्तुवृक्षस्य शिलायाः कस्यापि नरस्य इतरप्राणिनः वा ध्यानं कर्तुं शक्यते।

### २. ज्योतिर्ध्यानम्

ज्योतिर्ध्याने योगी चक्षुषी निमीलयन् चैतन्यं ध्रुवोर्मध्ये केन्द्रीकरोति। गीतासु उच्यते-

प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम्॥[17] इति

### ३. सूक्ष्मध्यानम्-

सूक्ष्मध्याने कुण्डलिन्याः ध्यानं क्रियते। उक्तं च घेरण्डसंहितायाम्- 'सूक्ष्मं विन्दुमयं ब्रह्म कुण्डली परदेवता।[18] हठयोगस्य मतानुसारेण कुण्डलिनीनाम्नीशक्तिः मानवशरीरे सुप्तावस्थायां तिष्ठति। प्राणायामस्य अभ्यासात् सा शक्तिः जागर्ति षट्चक्राणि च विभिद्य सा मस्तकस्थं सहस्रारचक्रं गच्छति। तानि षट्चक्राणि मूलाधार-स्वाधिष्ठान- मणिपुरानाहत-विशुद्धाज्ञाचक्रनामभिः ख्यातानि । तत्र आद्यं मूलाधारचक्रम्। तस्य स्थानं गुह्यद्वारम्। द्वितीयस्य स्वाधिष्ठानस्य स्थानं जननेन्द्रियम्। मणिपुरचक्रमुदरस्य निम्नभागे वर्तते। अनाहतचक्रस्य स्थानं नाभिप्रदेशः। हृदये विशुद्धाख्यस्य चक्रस्य स्थानं विद्यते।आज्ञाचक्रं ध्रुवोर्मध्यवर्ति। सुप्ता कुण्डलिनी मूलाधारे तिष्ठति । प्राणायामाभ्यासेन सा जागर्ति, क्रमेण एकैकं चक्रं भित्वा सहस्रारं गच्छति । कुण्डलिनीध्यानं सूक्ष्मध्यानमुच्यते।

### सगुणनिर्गुणध्यानम्

पुनश्च सगुणनिर्गुणभेदेन ध्यानं द्विधा विभज्यते। निर्गुणध्याने 'अहंब्रह्मास्मि' इति जीवब्रह्मणोः अभेदः एव ध्यानविषयः भवति। सगुणध्याने तु ब्रह्मणः स्थूलरूपाणि ध्यानविषयाः भवन्ति। तदुक्तं विष्णुपुराणे-

> न तद्योगयुजाशक्यं नृप ! चिन्तयितुं यतः।
> ततः स्थूलं हरेःरूपं चिन्तयेद्विश्वगोचरम् ॥[19]

### ओङ्कारध्यानम्

सर्वविधेषु सगुणनिर्गुणध्यानेषु ओंकारध्यानं श्रेष्ठम्। ओंकारश्रेष्ठत्वं प्रतिपादयता भगवता मृत्युना नचिकेतसं प्रति उक्तम्-

> सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति ।
> यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि ॥[20]

> पुनस्तत्रैवोच्यतीतदालम्बनं परमेतदालम्बनं महत् ।
> एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥[21]

प्रणवध्यानं सगुणरूपेण निर्गुणरूपेण च गृह्यते । यतः ॐकार एव सगुणं ब्रह्म । ॐकार एव निर्गुणं ब्रह्म । उक्तं माण्डूक्यकारिकायाम्-

> प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ।[22]

ओंकार एवं आत्मा। ॐकार एव इदं सर्वम्। तदुक्तं माण्डूक्योपनिषदि-ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद् भविष्यदिति सर्वमोङ्कार एव। माण्डूक्योपनिषदनुसारेण आत्मनः चत्वारः पादाः भवन्ति। ते च बैश्वानरतैजसप्राज्ञतुरीयनामानः। एते पादाः ओंकारस्य अ उ म इति मात्राभिः अभिव्यज्यन्ते। वैश्वानरपादः आत्मनः प्रथमः पादः वैश्वानरनाम्ना ज्ञायते। अयं जागरितस्थानः बहिष्प्रज्ञश्च। अस्य सप्तअङ्गानि सन्ति। तानि आकाशसूर्यवायुद्योजलपृथिवीग्नयः। अस्य एकोनविंशतिमुखानि भवन्ति। तानि- दशेन्द्रियाणि, पञ्चप्राणाः, मनो बुद्धिरहंकारः चित्तं चेति। अयं स्थूलभुक्। स्थूलवस्तुनि अस्य ग्रहणविषयाः। अस्य पादः ओंकारस्य 'अ'

[17] गीता-८/१०
[18] घेरण्डसंहिता-६/१
[19] विष्णुपुराणे-६/७/५५
[20] कठोपनिषदि-१/२/१५
[21] तत्र-१/२/१६
[22] माण्डूक्यकारिका-१/२६

इति मात्रा एव। तेजसः ब्रह्मणःद्वितीयःपादःतैजसनाम्नाख्यायते। वैश्वानरवत् अस्यापि आकाशादीनि सप्ताङ्गानि इन्द्रियादीनि एकोनविंशतिमुखानि। अयं स्वप्रस्थानः। सूक्ष्मवस्तून्यस्य ग्रहणविषयाः। अयम् अन्तःप्रज्ञः। अयं पादःओंकारस्य 'उ' मात्रा एव। प्राज्ञः ब्रह्मणः तृतीयः पादः प्राज्ञनाम्ना ख्यातः। अस्य स्थानं सुषुप्तिः। अयम् आनन्दभुक् प्रज्ञानघनः। यथाशस्यपरिमापनार्थं यवाः 'प्रस्थ' इति पात्रविशेषे परिपूर्य निःसार्यन्ते तथैव वैश्वानरतैजसौ प्राज्ञे विलीयेते पुनःउत्पद्येते। ओंकारस्य 'म' इति मात्राद्वारा अयं पादः अभिव्यज्यते। यथा वैश्वानरतैजसौ प्राज्ञे प्रविश्य निःसरतः तथा उच्चारणकाले 'अ' 'उ' इतिमात्रे 'म' मात्रायां पुनःपुनः प्रविश्य निःसरतः। बुद्धीन्द्रियाणि कर्मेन्द्रियाणि च दश, वायवश्च प्राणादयः पञ्च, मनोबुद्धिरहंकारश्चित्तमिति मुखानि[23]

**तुरीयपादः**

पूर्णः ओङ्कारः ब्रह्मणःचतुर्थः पादः। तदुक्तं माण्डूक्यकारिकायाम्-

अपूर्वोऽनन्तरोऽबाह्योऽनपरःप्रणबोऽव्ययः।

**पुनश्चतत्रैव**

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमःशिवः।[24]

एवं रूपेण ओंकारस्य चतुर्णां भागानां ब्रह्मणः चतुर्भिःपादैः सह एकरूपत्वात्प्रणव एव ब्रह्म। तस्मात्प्रणवध्यानमेव श्रेष्ठध्यानम्। सर्वेषु शास्त्रेषु प्रणवध्यानस्य प्रशक्तिः विहिता। उक्तं चमुण्डकोपनिषदि-

धनुगृहीत्वोपनिषदं महास्त्रं शरं ह्युपासान्निशितं संधयीत ।
आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि॥
प्रणवो धनुः शरोह्यात्मा ब्रह्मतल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥[25]

[23] माण्डूक्यकारिका-१/३

[24] तत्र-१/२९

[25] मुण्डकोपनिषत्-२/२/४

**उपसंहार**

ध्यानेन समाधिअसिद्धिः समायाति । ईश्वरं प्रति संयोगस्याधारः ध्यानम् । ध्यानं विहाय न योगसिद्धिर्जायते इति ध्यानस्य आवश्यकता लोकोपकारकफलं समुदेतीति । तथाहि भगवता-

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्।
यः प्रयाति त्यजन्देहं सयाति परमां गतिम् ॥[26]

ध्यानाभ्यासात् चित्तं शान्तं, समाहितं, प्रसन्नञ्च भवति। जीवनं व्यवस्थितं भवति । ध्यानं भुक्तेः प्रकृष्टं साधनं मुक्तेरपावृतं द्वारं चेति । इत्यलं विस्तरेण । जय जगन्नाथ ।

**सहायकग्रन्थाः**


1. श्रीमद्भगवद्गीता
2. माण्डूक्यकारिका
3. मुण्डकोपनिषत्
4. विष्णुपुराणम्
5. कठोपनिषत्
6. पातञ्जलयोगसूत्रम्
7. घेरण्डसंहिता
8. श्वेताश्वेतरोपनिषत्
9. पञ्चदशी
10. शिवसंहिता
11. गोरक्षसंहिता
12. हठयोगप्रदीपिका
13. योगचूडामण्युपनिषत्
14. योगकुण्डलिन्युपनिषत्
15. गर्भोपनिषत्
16. शरभोपनिषत्
17. श्रीमद्भागवतम्


[26] गीता-८/१३



International Journal of Sanskrit Research
अनन्ता

**ISSN: 2394-7519**
IJSR 2024; 10(1): 92-95

www.anantaajournal.com
Received: 05-11-2023
Accepted: 07-12-2023

**Sutapa Kar**
Research Scholar, Advaita Vedanta, NSU, Tirupati, Andhra Pradesh, India

**Corresponding Author:**
**Sutapa Kar**
Research Scholar, Advaita Vedanta, NSU, Tirupati, Andhra Pradesh, India

# अचिन्त्यभेदाभेदवाददर्शने बलदेवस्य जगन्मिथ्यात्वानित्यत्वखण्डनम्

Sutapa Kar

## प्रस्तावना

जगन्मिथ्यात्वानित्यत्वखण्डनप्रसङ्गे बलदेवेन उक्तं- भगवान् विष्णुः एव अनन्तब्रह्माण्डस्य उत्सः, सर्वज्ञानी, संहारकर्ता च। अतः स्वयमेव जगतः सृष्टिकर्ता स्वयं च संहारकर्ता इति। अतः जगन्न मिथ्या इति वक्तुं न शक्यते अपि तु विष्णोः शक्तिः कार्यस्वरूपम्। उक्तं प्रमेयरत्नावल्यां-

स्वशक्त्या सृष्टवान् विष्णुर्यथार्थं सर्वविज्जगत्।
इत्युक्तः सत्यमेवैतत्वैराग्यार्थमसद्वचः।।इति।

तस्य शक्तिविषये बहुत्र एकः भिन्नः वेति शङ्का दृश्यते यतोहि जङ्गमात्मके विश्वे सर्वत्र एकः एव गुणः अस्ति इति न अपि तु गुणानां समावेशः वर्तते। सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः इति सांख्यैः प्रमाणितम्। विष्णोः शक्तिः विषये विष्णुपुराणे उक्तं-

विष्णुशक्तिः परा प्रोक्ताक्षेत्रज्ञाख्या तथा परा।
अविद्या कर्मसंज्ञान्या तृतीयाशक्तिरिष्यते[1]।।इति।

सर्वासु शक्तिसु पराशक्तिः एव श्रेष्ठा। तस्य विष्णोः रूपं सच्चिदानन्दमित्युक्तम्। तृतीयशक्तिः अविद्याकर्मसंज्ञा सैव मायाशक्तिः इति विष्णुपुराणे उच्यते। अस्मिन् प्रसङ्गे श्रीजीवपादैः उक्तम्- अविद्या कर्मकार्यं यस्याः, सा तत् संज्ञा मायेत्यर्थः इति। इयं मायाशक्तिः एव भगवतः बहिरङ्गाशक्तिः इत्युच्यते। पराशक्तिः मायाशक्तिः इत्यनयोः मध्ये जीवशक्तिः अधिष्ठानस्वरूपा भवति। अतः तटस्था शक्तिः इत्युच्यते। परन्तु इयं शक्तिः भवति भगवतः नित्यदासी। इयं शक्तिः मनुष्यान् जगद्गतसर्वान्

---

[1] वि.पु.६.७.६१

आवृणोति, अतः सर्वे आवृताः सन् सर्वं विस्मरन्ति। एतस्मिन् सन्दर्भे जीवपादः पुनः उक्तं- यद्यपि इयं बहिरङ्गा, तथाप्यस्यास्तटस्थाशक्तिं जीवमावरयितुं सामर्थ्यमस्तीति।

श्रीभगवान् अनया मायाशक्त्या जगत्सृष्टवान् इति स्मर्यते किञ्च कृष्णद्वैपायनेने वेदव्यासेन

श्रीमद्भागवद्महापुराणे उक्तं- श्रीवासुदेवः उवाच- विदितोऽसि भवान् साक्षात् पुरुषः प्रकृतेः परः। केवलानुभवानन्दस्वरूप सर्वबुद्धिदृक्[2] इति। एवञ्च श्रीजीवगोस्वामीचरणकृतवैष्णव-तोषणीतिनामके लघुटीकाग्रन्थे उक्तं- यः प्रकृतेः परः प्रकृतिद्रष्टा पुरुषः सः भवान्, तथा यः केवलानुभवानन्दस्वरूपः परब्रह्माख्यो निर्विशेष आत्मा, सोऽपि भवान्, यश्चसर्वबुद्धिदृक् सर्वान्तर्यामीपरमात्मा सोऽपि भवानिति तद्रूपकत्वात् स्वयं भगवत्त्वेन विदितोऽसीत्यर्थः।

ब्रह्मणा साकं सर्वेषाम् एकत्वम् एतेन प्रसिद्धम्। तस्मात् एकमेव अद्वितीयम् इति सिद्धम्। श्रीमद्भागवते उच्यते-

वदन्ति तत्तत्त्वविदस्तत्त्वं यज् ज्ञानमद्वयम्।
ब्रह्मेति परमात्मेति भगवानिति शब्यते[3]।।इति।

एतेन श्लोकेन एतत् ज्ञायते यत् श्रीकृष्णः एव परं ब्रह्म सैव परमात्मा सैव प्रकृतैक्षणकर्ता इति। श्रीबलदेवविद्याभूषणकृतटीकाग्रन्थे उच्यते-

स्वरूपमन्याकारं यत्तस्य भाति विलासतः।
प्रायेणात्मसमं शक्त्या स विलासो निगद्यते[4]।।इति।

स्वरूपं कीदृशमिति प्रश्ने अन्याकारं विलक्षणाङ्गसन्निवेशम्। तस्य मूलरूपस्याव्यवहितं, विलासतः लीला-विशेषात् प्रायेणेति कैश्चिद्गुणरूपमित्यर्थः। यथा नारायणे न्युनाः। एवं मन्त्रे। इति। अत्र विष्णोः परमं पदं वर्तते। सैव स्रष्टा इति। सः ऐक्षत बहुस्यां प्रजायेय इत्यादि वचनैः विष्णोः तथा श्रीहरेः कर्तृत्वं कारणत्वं च उक्तम्। श्रीभगवतः जगत्कारणत्वविषये उच्यते श्वेताश्वेतरोपनिषदि- मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् इति अत्र मायी नाम महेश्वरः इति। सृष्टिस्थितिलयानाम् अत्र सिद्धान्ते विरोधः नास्ति। इदं ज्ञापयितुं भगवता श्रीकृष्णेन भगवद्गीतायाम् उक्तम्-

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परान्।
जीवभूतां महावाहो ययेदं धार्यते जगत्।। इति।

प्रसङ्गेऽस्मिन् टीकाकारेन विश्वनाथचक्रवर्तिना उक्तम्- इयं प्रकृतिर्वहिरङ्गाख्याशक्तिः अपरा अनुत्कृष्टजडत्वात् इतोऽन्यां प्रकृतिं तटस्थां शक्तिं जीवभूतां परामुत्कृष्टां विद्धि चैतन्यत्वात्। अस्याः उत्कृष्टहेतुः यया चेतनया इदं जगत् धार्यते स्वभोगार्थं गृह्यते इत्यर्थः।[5] भगवद्गीतायां पुनः उक्तं- दैवीह्येषागुणमयी मम माया दुरत्यया।[6] इति। एतैः सत्त्वरजस्तमगुणैः जगत् सृष्टम् अतः एतेषां गुणानां कर्तारः धारकाः अपि केवलं परमात्मैव। ब्रह्म सत्यं जगन्मिथ्या इत्यत्र वेदान्तमते ब्रह्म सत्यं स्वीक्रियते परन्तु जगन्मिथ्या इति अस्माभिः न स्वीक्रियते। जगन्मिथ्यात्वप्रसङ्गे अस्ति अस्माकं मतभेदः। मध्वाचार्यैः तु चैतन्यदेवकृतानुप्रेरणया जगन्मिथ्यात्वस्य खण्डनं सुष्ठु कृतं वर्तते। एतेषां शिष्येण श्रीबलदेवविद्याभूषणेन अपि भगवच्छङ्करकृतसिद्धान्तः न अङ्गीकृतः। किमर्थं शङ्करमतमिदं न युक्तं इति उच्यते- सशक्त्या सृष्टवान् विष्णुयथार्थं सर्वविज्जगद् इत्युक्ते सत्यमेवैतद् वैराग्यार्थमसद्वचः अत्र स्वशक्त्या निजशक्तिं समाश्रित्य इत्यर्थः। अत्र परिष्कृतमस्ति यत् श्रीविष्णुना तथा श्रीहरिणा स्वमायया

[2] श्रीम.गी.१०.३.१३

[3] श्रीमद्भा..१.२.११

[4] लघु.भा.अ.पूर्वखण्ड.

[5] श्रीम.गी.७.५

[6] श्रीम.गी.- ७.१४

जगत्सृष्टं पालितं लयकृतं च। अतः एतस्मात् शास्त्रोक्तवचनात् जगतः सत्यत्वं सिद्धं वर्तते।

श्रीधरस्वामिना उक्तम्, अचिन्त्यज्ञानं तदेव भवति यत् तर्कगम्यं नास्ति। अचिन्त्यं तर्कासहं यज्ज्ञानम् इति। जीवगोस्वाम्यनुसारेण अचिन्त्यं भवति- अर्थापत्तिगम्य भिन्नाभिन्नत्वादिविकल्पेश्चिन्तयितुमशक्यः केवलमर्थापत्तिज्ञानगोचरः इति। भागवत् सन्दर्भे अपि दृश्यते- अचिन्त्यं सैव शक्तिः या असम्भवं सम्भावयति, अथवा अभेदेऽपि भेदं दर्शयति। दुर्घटघगकत्वम् अचिन्त्यत्वम् इति रूपगोस्वामिनः मतं वर्तते, यत् पुरुषोत्तमे एकत्व-पृथत्तत्वम् अंशत्व-अंशित्वं च युगपत् तिष्ठतः। येन प्रकारेण अग्नौ दाहशक्तिः तेन प्रकारेण भगवति श्रीकृष्णे अपि षोडशसहस्त्रनारीभिः सह एकस्मिन् काले स्थातुं शक्तिः वर्तते, परन्तु अत्र काऽपि तार्किकव्याख्या न वर्तते। इत्येवं प्रकारेण अभेदेऽपि भेदसंज्ञा भेदसत्ता वा अङ्गीक्रियते। एतदेव अचिन्त्यभेदाभेदः इत्युच्यते।

आदिशङ्कराचार्यानुसारेण निर्विकल्पकं ब्रह्म एकमेव परं सत्यं यथार्थप्रमा, एतदेव एकं साधनीयम्। ब्रह्म सच्चिदानन्दमयम्, एतस्य निर्विकल्पकप्रत्यक्षेण सद्ज्ञानं भवति। सदेव चिन्मयम्। रामाणुज-वल्लभ-मध्वादयस्तु निर्विकल्पकस्य सत्ता नाङ्गीकुर्वन्ति। चैतन्यदेवः ब्रह्म सविकल्पकं मन्यते। किञ्च ब्रह्मणः प्राप्तिमार्गः केवलं भक्तिः इति कथ्यते। चैतन्यमतावलम्बी जीवगोस्वामी अपि निर्विकल्पकब्रह्मणः सत्ता नाङ्गीकरोति। निर्विकल्पकब्रह्मस्वीकर्तव्यं चेत् सविकल्पकब्रह्मणः अपूर्णदशा आयाति। अतः ब्रह्म केवलं भक्तिगम्यं स्वीकृतम्। बल्लभाचार्येण यः भक्तिमार्गः उक्तः सैव एषः चैतन्यभक्तिमार्गः इति। चैतन्यमहाप्रभुः गुणगुणिनोः यथा भावः तथैव जीवब्रह्मणोः अभिन्नता भिन्नता चेति अनुमन्यते।

मध्वाचार्यैः जीवब्रह्मणोः अन्तरः सेव्यसेवकभावयुक्तः इति स्मर्यते। गौडीयवैष्णवसम्प्रदायानुसारेण ब्रह्मजीवयोः सेव्यसेवकभावं विहाय अतिरिक्ताः शान्तः, सख्यः, वात्सल्यः, मधुरभावादयः अपि स्वीक्रियन्ते। जीवगोस्वामी ब्रह्म अद्वयं ज्ञानतत्त्वं वदति। तत्र शङ्कराचार्यः वदति ब्रह्म केवलम् अद्वयम्, एतदतिरिक्तं द्वितीयं किमपि तत्त्वमेव नास्ति। रूपगोस्वामी अपि तथैव ब्रह्मभिन्नं किमपि अद्वितीयं तत्त्वं नास्तीति स्वीकरोति। जीवगोस्वामी भगवान् श्रीहरिः परं तत्त्वम् इति अङ्गीकरोति, ब्रह्म निर्विशेषम्। ब्रह्मणि शक्तिः अव्यक्तरूपेण तिष्ठति, भगवति तु क्रियाशीलता अस्ति। परन्तु ब्रह्मैव परमात्मा मायाशक्तिसम्बन्धात् इति पुनः स्थाप्यते।

**निष्कर्षः**

यद्यपि इदम् अद्वैतविरूद्धं तथापि सर्वे आचार्याः स्व स्वदर्शनं प्रतिस्थापयितुम् अन्यस्य दर्शनस्य मतखण्डनं कुर्वन्ति। बलदेवाचार्यः स्ववैष्णवदर्शनं तथा अचिन्त्यभेदाभेददर्शनं सुष्ठु प्रतिस्थापयितुं पूर्णवप्रज्ञभाष्यं किञ्च चैतन्यमतादर्शम् अधिकृत्य इदं अचिन्त्यभेदाभेददर्शनं सुदृढीकृतम्। अत्र अद्वैतवैष्णवदर्शयोः सूक्ष्मभेदाः वर्तन्त। यत् मया स्वशोधप्रबन्धे तौलनिकाध्ययनेन अद्वैतसिद्धान्तं सुष्ठु प्रतिपादितम्। बलदेवविद्याभूषणः अत्र जगतः मिथ्यात्वं किञ्च अनित्यत्वं निराकृतम्। सः वदति-

स्वशक्त्या सृष्टवान् विष्णुर्यथार्थं सर्वविज्जगत्।
इत्युक्तः सत्यमेवैतत्वैराग्यार्थमसद्वचः।।इति।

अतः .यत् विष्णोः सृष्टिरस्ति तत् कदापि अनित्यं भवितुं नार्हति। भगवान् श्रीहरिः यथा अस्माकं पूज्यः तथैव इदं जगत्। परन्तु अद्वैते जगत् मिथ्या इति प्रतिपादितम्। तत्रोच्यते जगत् मायया सृष्टम्। माया च ब्रह्मणः शक्तिः। यथा मृदा घटमुत्पद्यते नश्यते च। तथैव जगत् उत्पद्यते नश्यते च कार्यवत् इति। तत्र प्रमाणं दर्शयति। नेह नानास्ति किञ्चन, वाचारम्भणं विकारमात्रनामधेयं मृत्तिकेत्येव सत्यम् इति। सदेव सोम्य इदमग्रे आसीदेकमेवाद्वितीयम् इति उपनिषद्मन्त्रेणैव जगतः मिथ्यात्वम् अनित्यत्वं च सिद्ध्यति।

## सन्दर्भ


1. ब्रह्मसूत्रशाङ्करभाष्यम्-शङ्करभगवत्पादः, आचार्यजगदीशशास्त्री, मोतीलाल बनारसीदास, वाराणसी, चौखम्बा, १९९६।
2. श्रीमद्भगवद्गीताशाङ्करभाष्यम्- गीताप्रेस्, गोरखपुरम्।
3. चैतन्यचरितामृतम्- गीताप्रेस्, गोरखपुरम्।
4. विष्णुपुराणम्-गीताप्रेस्, गोरखपुरम्



International Journal of Sanskrit Research
अनन्ता

**ISSN: 2394-7519**
IJSR 2024; 10(1): 106-109

www.anantaajournal.com
Received: 03-12-2023
Accepted: 07-01-2024

**सुमननस्करः**
शोधच्छात्रः, नव-नालन्दा-महाविहारः
(सम-विश्वविद्यालयः), नालन्दा, बिहारः,
भारत

**Corresponding Author:**
**सुमननस्करः**
शोधच्छात्रः, नव-नालन्दा-महाविहारः
(सम-विश्वविद्यालयः), नालन्दा, बिहारः,
भारत

# नासदीय-सूक्तानुसारेण सृष्टिरहस्यम्

**सुमननस्करः**

**DOI:** https://doi.org/10.22271/23947519.2024.v10.i1b.2297

**शोधसारः**
वैदिकऋषयः सत्यस्य शिवस्य सुन्दरस्य च पूजारी आसन्। ऋषयस्तु तत् सत्यं शिवं सुन्दरं सच्चिदानन्दं सर्वत्रमेव उपलब्धिं कृतवन्तः। दार्शनिकचिन्तासमृद्धसूक्तेषु अन्यतमं भवति नासदीयसूक्तम्। 'नासदासीत्' (न + असत् + आसीत्) इति शब्दबन्धतः वैदिकसम्प्रदाया: 'नासदीय-सूक्तम्' इति नाम्ना आख्यायन्ते। अस्मिन् सूक्तस्य ऋषिरस्ति परमेष्ठीनामकः प्रजापतिः। परमात्मा इति देवता अस्ति। गतो विनियोग अपि अस्ति। छन्द: अस्ति त्रिष्टुपः।

नासदीयसूक्ते मुख्यतया सृष्टितत्त्वमालोचितम्। तत्र निर्देशितं यत् सदसत् वा किञ्चिदपि न पृथ्विसृष्टेः मूलकारणम्। सृष्टेः पूर्वं किञ्चिदपि नासीत्। नासीत् सत्, नासीत् असत्, नासीत् मृत्युः, नासीत् अमरत्व। नासीत् दिवसः, नासीत् रात्रिः। सर्वमासीत् तमोमयं जलमग्नञ्च –

"नासदासीन्नो सदासीत्तदानीं
नासीद्रजो नो व्योमा परोयत्।
किमावरीवः कुह कस्य शर्म-
न्नम्भः किमासीद्गहनं गभीरम्"[1]॥

आचार्यसायणस्य व्याख्यानुसारेण मन्त्रेऽस्मिन् सृष्टेः प्रागवस्था प्रलयदशा वा सूचयति। विषयेऽस्मिन सायणभाष्ये उल्लिखितं यत् - "अधुना ततः प्रागवस्था निरस्तसमस्तप्रपञ्चा या प्रलयावस्था सा निरूप्यते"[2] इति। सायणाचार्यस्य व्याख्यायाम् 'असत्' इति पदं प्रकृतरूपेण निरुपणस्य अयोग्यमेवमेकमवस्था। प्रसङ्गेऽस्मिन् सायणाचार्येण स्पष्टतया उल्लिखितं यत् – "अस्य जगतो मूलकारणं तत् असत् शशविषाणवन्निरूपाख्यं न आसीत्"[3] इति। तत्काले यत् नासीत् तदपि नासीत्। यदस्ति तदपि नासीत्। नासीत् पृथिवी, नासीदतिदूरं विस्तृतमाकाशम्। तर्हि आवृत्तं कृत्वा किमासीत्? कस्य कुत्र स्थानमासीत्?

तत् प्रलयकाले व्यवहारिक-जगतः, भावपदार्थः, पृथिव्यादिव्योमलोक: - एतेषां अस्तित्त्वमपि नासीत्। तस्मिन् समये मृत्युः नासीत्, अमृत्यु अपि नासीत्। न रात्रिः, न आलोकमयदिवसः, न प्राणसञ्चारी वायुः किञ्चिदपि नासीत्। प्रसङ्गेऽस्मिन् ऋषिणा निर्देशितं यत् –

"न मृत्युरासीदमृतं न तर्हि
न रात्र्या अह्न आसीत्प्रकेतः"[4] इति।

अतोऽत्र प्रश्नोऽपि आगच्छति - किमासीत् तस्मिन् प्रलयकाले? एतस्य उत्तरमपि द्वन्द्वमूलकं –

"तम आसीत्तमसा गूढम्"[5] इति।

---

[1] ऋ. सं. १०/१२९
[2] सायणभाष्यम्
[3] सायणभाष्यम्
[4] ऋ. सं. १०/१२९/२
[5] ऋ. स. १०/१२९/३

एवं प्रलयदशायां भूतभौतिकं सर्वविषयं ज्ञानविरोधी अज्ञानान्धकारे आवृतमासीत्। विषयेऽस्मिन् सायणाचार्येण निर्देशितं यथा – "सृष्टेः प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत तमसा गूढम्। यथा नैशं नमः सर्वपदार्थ जातमावृणोति तद्वत्"[6] इति। ततः सृष्टिक्रमः प्रारम्भमभवत्। अज्ञानान्धकारे आवृतं यत् जगतमस्ति तत्र ब्रह्म-महत्वे हिरण्यगर्भमजायत। विषयेऽस्मिन् ऋषिणा निर्देशितं यत् –

"यदासीत्तपसस्तन्महिनाजायतैकम्"[7] इति।

अनन्तरं मनसः उपरि कामस्याविर्भावोऽभवत्, तस्मात् प्रथमतया उत्पत्तेः हेतुः निर्गतोऽभवत्, अस्मिन् प्रसङ्गे ऋषिणा उक्तं यत् –

"कामस्तदग्रे समवर्तताधि
मनसो रेतः प्रथमं यदासीत्"[8] इति।

परम्-सत्यं न अवगताय ऋषेः जिज्ञासा - एवं सृष्टिः, एवं वैचित्र्यम्, जड़चैतन्यम्, अन्धकारः, प्रकाशः - एतेषां कार्यकारणसम्पर्कः कोऽस्ति –

"को अद्धा वेद क इह प्रवोचत्
कुत अजाता कुतः इयं विसृष्टिः।
अर्वागदेवा अस्य विसर्जनेना-
था को वेद यत आवभूव"[9]।।

एवं सृष्टिप्रक्रिया केन प्रकारेण निर्माणमभवत्, कः सृष्टिप्रक्रिया निर्माणं कृतवान्, विषयेऽस्मिन् उत्तमरूपेण कः जानाति - एवं ऋषेः जिज्ञासा –

"इयं विसृष्टिर्यत् आबभूव
यदि वा दधे यदि वा न।
यो अस्याध्यक्षः परमे व्योम-
न्त्सो अङ्ग वेद यदि वा न वेद"[10]।।

सृष्टेः रहस्यमुन्मोचने वैदिक-ऋषयः प्रकृतरूपेण सत्यानुसन्धित्सु आसन्। तत्सत्यदर्शनं तत्त्वोपलब्धिश्च प्रकृतरूपेन आत्माविष्कार-स्वरूपमेव आसीत्। नासदीय सूक्ते तत् स्पष्टमभवत्।

**विषयसूचकशब्दाः :-** सृष्टिरहस्यम्, नासदीयसूक्तम्, पृथिवी, ऋग्वेदः, उत्पत्तिः।
**उद्देश्यम्:** अस्य शोधप्रबन्धस्य प्राथमिक उद्देश्योऽस्ति नासदीय-सूक्तानुसारेण सृष्टिरहस्यम् उद्घाटनम्, सृष्टेः पूर्वं किमासीत् एवं विषये अपि अनुसन्धानम्। अपि च नासदीय-सूक्तस्य दार्शनिक-तत्त्वमुद्घाटनमेव अस्य शोधप्रबन्धस्य उद्देश्यः।

**भूमिका:** सृष्टेः प्राक् किमासीत् एतस्मिन् विषये परमेष्ठी नाम प्रजापति ऋषिः एव नासदीय सूक्ते आलोकपातमकरोत्। यदा किमपि नासीत्, यदा कस्यापि द्रव्यस्य अस्तित्त्वमपि नासीत् - एवमवस्थायाः वर्णनां करोति नासदीयसूक्तम्। यदि किञ्चिदपि नासीत् तर्हि किमासीत् तत्काले? अस्य संसारस्य उत्पत्तिः कुतः अभवत्? परमेष्ठी इति नाम्ना प्रजापतिऋषिणा दृष्टे नासदीय-सूक्ते निषेधात्मक-रूपेण सृष्टेः हेतुः, सृष्टेः उद्देश्य अपि च सृष्टेः रचयिता विषये सप्त मन्त्राणां वर्णना कृता। विषयेऽस्मिन् निम्ने विस्तारितरूपेण वर्णनां प्रदीयते –

**सृष्टेः प्रागवस्था:** सृष्टेः पूर्वं किमासीत् तद्विषये परमेष्ठी इति नाम्ना प्रजापतिऋषिणा निर्देशितं यत् - सृष्टेः पूर्वं सत् नासीत्, असत् अपि नासीत् –

"नासदासीन्नो सदासीत्तदानीम्"[11]।

अर्थात् सृष्टेः पूर्वं किञ्चिदपि व्यक्तं नासीत्, अव्यक्तमपि नासीत्। कस्यापि पदार्थस्य किञ्चित् अस्तित्त्वं नासीत्। किञ्चित् साकारसत्ता अपि नासीत्। तदानीं किमपि एकं लोकमपि नासीत्, आकाशम् अपि नासीत्। तत्काले आकाशविषये अन्तरिक्षविषये वा किमपि ज्ञानं नासीत्। सर्वमासीत् सीमाहीनम्। प्रसङ्गेऽस्मिन् सायणाचार्येण निर्देशितं यत् – "अधुना ततः प्रागवस्था निरस्तसमस्तप्रपञ्चा या प्रलयावस्था सा निरूप्यते। तदानीं प्रलयदशायामवस्थितं यदस्य जगतो मूलकारणं तत् असत् शशविषाणवन्निरूपाख्यं न आसीत्। न हि तादृशात् कारणादस्य सतो जगत उत्पत्तिः सम्भवति। तथा नो सत् नैव सदात्मवत् सत्त्वेन निर्वाच्यम् आसीत्। यद्यपि सदसदात्मकं प्रत्येकं विलक्षणं भवति तथापि भावाभावयोः सहावस्थानमपि सम्भवति। कुतस्तयोः तादात्म्यमिति उभयविलक्षणमनिर्वाच्यमेवासीदित्यर्थः"[12] इति। सृष्टेः पूर्वं यत् नास्ति तदपि नासीत्, यदस्ति तदपि नासीत्। आकाशः पृथिवी वा किञ्चिदपि नासीत्। तदा मृत्यु अमरत्व वा, दिवसः निशा वा किञ्चिदपि नासीत्। केवलं परमात्मया विना किमपि नासीत्। तदा तमसया तमसामावृतमासीत्, सर्वमासीत् जलमयम्। एवमवस्थायाम् ऋषेः जिज्ञासा – तदा किञ्चित् अपि स्थानस्य सीमा आसीत् वा अथवा किमपि आवरणम् असीत् वा? यदि स्थानस्य सीमा आसीत् तर्हि किं द्रव्येन वेष्ठितमासीत्? तदा किमपि भासमान् सत्तायाः अस्तित्त्वं वा आसीत् खलु यत् किमपि स्पर्श, गन्ध, दृष्टि द्वारा अनुभवं कर्तुं शक्नोति –

"अम्भः किमासीद्गहनं गभीरम्"[13]

अस्मिन् विषये सायणाचार्येण निर्मितेन भाष्यं यथा – "गहनं दुष्प्रवेशं गभीरं दुरवस्थानमत्यगाधम् ईदृशम् अम्भः किमासीत्। तथापि नैवासीदित्यर्थः"[14] इति।

**सृष्टेः स्रष्टा:** तत् प्रलयकाले व्यवहारिक-जगत्, भावपदार्थः,पृथिव्यादिव्योमलोकः - एतेषां अस्तित्त्वमपि नासीत्। तत् समये मृत्यु नासीत्, अमृत्यु अपि नासीत्। न रात्रिः, न आलोकमयदिवसः, न प्राणसञ्चारी वायुः किञ्चिदपि नासीत्। प्रसङ्गेऽस्मिन् ऋषिणा निर्देशितं यत् –

"न मृत्युरासीदमृतं न तर्हि
न रात्र्या अह्न आसीत्प्रकेतः।"[15] इति।

प्रसङ्गेऽस्मिन् सायणाचार्येण निर्देशितं यत् – "ननूक्तस्य प्रतिसंहारस्य संहर्त्रपेक्षत्वात् स एव संहर्ता मृत्युर्विद्यत इत्यत आह न मृत्युरासीत् इति। ननु यदि स नासीत् तर्हि तदभावकृतम् अमृतम् अमरणं प्राणिनावस्थानं तदानीमपि स्यात् तत्राह। अमृतं न तर्हि इति। तर्हि तस्मिन् प्रतिहारसमये। अयं भावः। सर्वेषां प्राणिनां परिपक्वं भोगहेतुभूतं सर्वं कर्म यदीपभूक्तमासीत् तदा भोगाभावान्निष्प्रयोजनमिदं जगदिति परमेश्वरस्य मनसि सञ्जिहीर्षा जायते।"[16] सृष्टेः पूर्वं अमरत्वस्य अमृतस्य वा ज्ञानमपि नासीत्। तदा निशाकालस्य दिवसस्य वा किञ्चित् चिह्नमपि नासीत्, तदा एकाकी एव वायुं बिना स्वेच्छया श्वासग्रहणं कृतम् –

"आनीदवातं स्वधया तदेकम्"[17]

अत्र एवं स्पष्टं यत् कोऽपि एकः एवमासीत् यः स्वस्य सत्त्वया सह विद्यमानमासीत्। परन्तु तदा तमसया तमः गुढ़मासीत्। 'गूढ़' इति पदस्यार्थः भवति अप्रकाशितमिति। अर्थात् यत् सम्यकतया ज्ञातं नाभवत्, यस्य अस्तित्त्वनास्तित्वं विषये च संशयः

[6] सायणभाष्यम्
[7] ऋ. सं. 10/129/3
[8] ऋ. सं. १०/१२९/४
[9] ऋ. सं. १०/१२९/६
[10] ऋ. सं. १०/१२९/७
[11] ऋ. सं. १०/१२९/१
[12] सायणभाष्यम्
[13] ऋ. स. १०/१२९/१
[14] सायणभाष्यम्
[15] ऋ. सं. १०/१२९/२
[16] सायणभाष्यम्
[17] ऋ. सं. १०/१२९/२

अस्ति। यस्य अभ्यन्तरे किमपि अस्ति नास्ति वा विषयेऽस्मिन् कस्यापि ज्ञानं नास्ति, सर्वमस्ति रहस्यमयमावृतं वा। तदा सर्वमासीत् चिह्नरोहितं जलमयञ्च। तदा अविद्यमानस्य प्रभावेन तथा अज्ञानस्य प्रभावेन सर्वम् आच्छादनम् आवृतं वा आसीत्। तदा तपः प्रभावेन एकम् अद्वितीयम् उत्पन्नमभवत् –

"तम आसीत्तमसा गूढमग्रे-
ऽप्रकेतं सलिलं सर्वमा इदम्।
तुच्छयनाभ्वपिहितं यदासी-
त्तपसस्तन्महिनाजायतैकम्"[18]॥

अस्मिन् विषये सायणाचार्येण तस्य भाष्ये निर्देशितं यत् – "तमो भावरूपज्ञानं मूलकारणम्। तद्रूपता तदात्मनाम्। यतः सर्वं जगत् प्राक् तम आसीदतो निषिध्यत इत्यर्थः। नन्वावरकत्वादावरकं तमः कर्तृआवार्यत्वाज्जगत्कर्म"[19] इति।

**सृष्टेः निर्माणम्:** तत् सृष्टेः पूर्वं कामना इच्छा वा आसीत्, यत् सृष्टेः कामना हेतोः प्रेरणामुत्पन्नं कृतम्। तन्मस: अन्तःकरणे विद्यमाना कामना इच्छा वा सृष्टेः निर्माणस्य प्रथमं प्रारम्भिकं वीजस्वरूपमासीत्। ततः तपः अर्थात् सृष्टिः निर्माणस्य इच्छा आगता –

"कामस्तदग्रे समवर्तताधि
मनसो रेतः प्रथमं यदासीत्।
सतो बन्धमसति निरविन्दन्
हृदि प्रतीष्या कवयो मनीषा"[20]॥

प्रसङ्गेऽस्मिन् नासदीय सूक्तस्य भाष्ये सायणाचार्येण उक्तम् यत् – "अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि काम: समवर्तत सम्यगजायत। मनसः अन्तःकरणस्य सम्बन्धि वासनाशेषेण मायाया विलीनेऽन्तःकरणे समवेतम्। सर्वप्राण्यन्तःकरणेषु समवेतमित्यर्थः। एतेनात्मनो गुणाधारत्वं प्रत्याख्यातम्। तादृशं रेतः भावितः प्रपञ्चस्य बीजभूतं प्रथममतीते कल्पे प्राणिभिः कृतं पुण्यात्मकं कर्मं यत् यतः कारणात् सृष्टिसमये आसीत् अभवत्। भूष्णु वर्धिष्ण्वजायत परिपक्वं सत् फलोन्मुखमासीदित्यर्थः। तत्ततो हेतोः फलप्रदस्य सर्वसाक्षिण: कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षा अजायतेत्यर्थः। तस्यां च जातायां स्रष्टव्यं पर्यालोच्य ततः सर्वं जगत् सृजति" इति[21]।
ऋषयः मुनयश्च स्वस्य चैतन्येन हृदये विचारं कृत्वा तत् एकम् अविनश्वरं प्राप्तमभवत्। यदस्ति समग्रे व्रह्माण्डे तदस्ति अस्माकं अभ्यन्तरे वीजरूपेण। कारणमस्ति व्रह्माण्डस्य तत्त्वादेव अस्माकं सर्वेषां निर्माणमभवत्। य अणुः परमाणुः च सृष्टेः मूलभूतरूपं, तदस्माकं शरीर-निर्माणमपि करोति। सर्वोपरि तत् तु एकमासीत्। अनन्तरं रेतस् तथा मूल-इच्छा कामनारूपवीजो वा आसीत् यदासीत् महान् शक्तिमान्। एतस्य अन्तराले आसीत् महान् तपः तथा सृष्टि-रचनायाः विशेष-इच्छा। अनन्तरमासीत् तस्य प्रयत्नम्। अन्तिमे तस्य विस्तृतभूतं सत्त्वा आसीत्। अर्थात् तत् आसीत् वर्तमानकाले कृतं निर्माणस्य प्राक्-रूपम्। विषयेऽस्मिन् परमेष्ठी नाम प्रजापतिः ऋषिः निर्देशप्रदानं करोति यत् –

"तिरश्चीनो विततो रश्मिरेषा-
मधः स्विदासी३दुपरि स्विदासी३त्।
रेतोधा तथा आसन्महिमान आस-
न्त्स्वधा अवस्तात्प्रयतिः परस्तात्॥"[22] इति।

विषयेऽस्मिन् सायणाचार्येण तस्य भाष्ये निर्देशितं यत् – "येयं नासदासीदित्यविद्या प्रतिपादिता यश्च कामस्तदग्रे इति कामो मनसो रेतः प्रथमं यदासीदिति यत्कर्म एषाम् अविधा कामकर्मणां वियदादिभूतजातानि सृजतां रश्मिः रश्मिसदृशो यथा सूर्यरश्मिः उदयानन्तरं निमेषमात्रेण युगपत् सर्वं जगत् व्याप्नोति तथा शीघ्रं सर्वत्र व्याप्नुवन् यः कार्यवर्गः विततः विस्तृतः आसीत्। स्विदासीत् इति वक्ष्यमाणमत्रापि सम्बध्यते।"[23]
अनन्तरम् ऋषेः मनसि प्रश्न आगतो यत् - एवं सृष्टिरहस्यम् कः पूर्णतया जानाति, सृष्टिरस्यविषये कः वर्णनां करिष्यति, कुतः सर्वमजायतम्, देवाः एवं सृष्टेः पूर्वं सृष्टमभवन् पश्चात् वा, कुतः अभवन् - विषयेऽस्मिन् कः जानाति इत्यादिनी। अस्मिन् विषये ऋग्वेदस्य दशम-मण्डले परमेष्ठी इति नाम्ना प्रजापतिऋषिणा नासदीयसूक्ते उक्तम् –

"को अद्धा वेद क इह प्रवोच-
त्कुत आजाता कुत इयं विसृष्टिः।
अर्वाग्देवा अस्य विसर्जनेना-
था को वेद यत आबभूव॥"[24] इति।

अस्मिन् प्रसङ्गे सायणाचार्येण निर्देशितं यत् – "अथेदानीं सा सृष्टिर्विज्ञानेति न विस्तरेणाभिहितेत्याह को अद्धेति। कः पुरुषः अद्धा पारमार्थ्येन वेद जानाति। कः वा इह अस्मिँल्लोके प्र वोचत प्रब्रूयात्। इयं दृश्यमाना विसृष्टिः विविधा भूतभौतिकभोक्तृ-भोग्यादिरूपेण बहुप्रकारा सृष्टिः कुतः कस्मादुपादानकारणात्। कुतः कस्माच्च निमित्तकारणात् अजाता समन्ताज्जाता प्रादुर्भूता। एतदुभयं सम्यक् को वेद को वा विस्तारेण वक्तुं शक्नुयादित्यर्थः"[25] इति।
अनन्तरं पुनः ऋषेः जिज्ञासा - एवं बहुविधानि निर्मितानि कुतः अभवन्, कः कृतवान् एवं सृष्टिः कोऽपि न कृतवान् वा, यः ईश्वर-स्वरूपं भूत्वा परमधामे अस्ति तेन केवलं ज्ञातुं शक्यते, तेन न ज्ञायते - एवमपि भवितुं शक्यते इत्यादीनि। विषयेऽस्मिन् सायणाचार्यस्य मतं यथा – "उक्तप्रकारेण यथेदं जगत्सर्जनं दुर्विज्ञानं एवं सृष्टं तज्जगत् दुर्धरमपीत्याह इयमिति। यतः उपादानभूतात् परमात्मनः इयं विसृष्टिः विविधा गिरिनदीसमुद्रादिरूपेण विचित्रा सृष्टिः आबभूव आजाता सोऽपि किल यदि वा दधे धारयति यदि वा न धारयति। एवं च को नाम अन्यो धर्तुं शक्नुयात्। यदि धारयेदीश्वर एव धारयेन्नान्य इत्यर्थः। एतेन कार्यस्य धारयितृत्वप्रतिपादनेन ब्रह्मण उपादानकारणत्वमुक्तं भवति।"[26] प्रसङ्गेऽस्मिन् परमेष्ठी इति नाम्ना प्रजापतिऋषिणा ऋग्वेदस्य नासदीयसूक्ते निर्देशितं यत् –

"इयं विसृष्टिर्यत आबभूव
यदि वा दधे यदि वा न।
यो अस्याध्यक्षः परमे व्योम-
न्त्सो अङ्ग वेद यदि वा न वेद॥"[27] इति।

तपः प्रभावेन एकस्य वस्तुनः आविर्भावोऽभवत्। मनसः उपरि कामस्याविर्भावोऽभवत्। तस्मात् जगत्सृष्टेः हतुः निर्गतोऽभवत्। पुरुषस्य उद्भवमभवत्, महिमा सर्वस्य उद्भवमभवत्।

**मूल्यायणम्:** ऋग्वेदस्य दशम-मण्डले नासदीय-सूक्ते परमेष्ठी इति नाम्ना प्रजापतिऋषिणा सप्त-मन्त्रेषु एव सृष्टिरहस्यमुद्घाटितम्। सृष्टेः पूर्वं किमासीत् इति विषयेऽपि ऋषिणा आलोकपातमकरोत्। एवंविध-विषये गभीर दार्शनिक-आलोचना स्पष्टं कृतम्, परन्तु अस्मिन् सूक्ते कृतेन अनुसन्धानेन सह जरायुजप्राणीनां सृष्टिवृत्तान्तमपि मिलति। यतः ऋषयः उपमाच्छलेन एव सर्वं वर्णनां कृतवन्तः ततः सूक्तेऽस्मिन् जरायुज-प्राणिनां सृष्टिवृत्तान्तं पृथिवी-सृष्टिवृत्तान्तस्य माध्यमेन उपमाच्छलेन उपस्थापनं कर्तुं शक्यते।

[18] ऋ. सं. १०/१२९/३
[19] सायणभाष्यम्
[20] ऋ. सं. १०/१२९/४
[21] सायणभाष्यम्
[22] ऋ. सं. १०/१२९/५
[23] सायणभाष्यम्
[24] ऋ. सं १०/१२९/६
[25] सायणभाष्यम्
[26] सायणभाष्यम्
[27] ऋ. सं. १०/१२९/७

**निर्वाचिता: ग्रन्थपञ्जी**


1. सेन, शुक्ला. "द्वितीयार्ध." श्रौतपाठ, संस्कृतवुकडिपो, २००४, पृष्ठा-२०९-२२८.
2. पाठक, ड. यमुना, सिंह, ड. उमेश प्रसाद. "नासदीयसूक्तम्." नवीनवैदिकसञ्चयनम्, चतुर्थ, चौखाम्वा कृष्णदास अकादमी, २०१९, पृष्ठा-३३१-३४३.
3. कुमार, दीपक, भट्ट, संजय दत्त. "वैदिक साहित्य का विशिष्ट अध्ययन." संस्कृतप्रतिस्पर्धाप्रकाश, चौखाम्वा सुरभारती प्रकाशन, २०२१, पृष्ठा-३०-६९.
4. मुत्सुद्दि, श्री वीरेन्द्रलाल. "चित्त." अभिधर्म्मार्थ-संग्रह, संशोधित पुनर्मुद्रण, महावोधि वुक एजेन्सी, २००८.
5. श्यामल, किशोर. "महर्षि पतञ्जलि प्रणीत योग मनोविज्ञान." पातञ्जल योग मनोविज्ञान, प्रथम संस्करण, जानकी प्रकाशन, २०१६.
6. मण्डल, कृष्णकाली. "नासदीयसूक्त." वैदिक साहित्यचर्चा, प्रथम प्रकाश, संस्कृत पुस्तक भाण्डार, २०१७, पृष्ठा-१९१-१९३.
7. https://hi.wikipedia.org/wiki/%E0%A4%A8%E0%A4%BE%E0%A4%B8%E0%A4%A6%E0%A5%80%E0%A4%AF_%E0%A4%B8%E0%A5%82%E0%A4%95%E0%A5%8D%E0%A4%A4
8. https://en.wikipedia.org/wiki/Nasadiya_Sukta
9. https://vedic-literature.blogspot.com/2015/03/10129.html
10. https://sanskritdocuments.org/doc_veda/naasadiiya.html
11. https://www.egyankosh.ac.in/bitstream/123456789/71662/1/Unit-12.pdf
12. https://www.pravakta.com/nasdiya-of-the-vedas-creation-theory-in-cataclysm-as-sukt-and-describe-the-origin/
13. https://www.youtube.com/watch?v=9iRMYII8otE
14. https://legendnews.in/single-post?s=-nasadiya-sukta-of-rigveda-gives-answer-to-every-question-regarding-the-origin-of-the-universe--12163
15. https://chintan101.blogspot.com/2017/08/nasadiya-sukta-with-english-translation.html
16. https://www.slideshare.net/DeeptiBajpai6/ss-237651447
17. https://vedicheritage.gov.in/pdf/ved_vedang_gp_48.pdf
18. https://www.sanatangroup.org/nasadiya-suktam/15733/
19. https://www.indiaspeaksdaily.com/nasadiya-sukta-ep-2/
20. https://www.hmoob.in/hi/%E0%A4%A8%E0%A4%BE%E0%A4%B8%E0%A4%A6%E0%A5%80%E0%A4%AF_%E0%A4%B8%E0%A5%82%E0%A4%95%E0%A5%8D%E0%A4%A4
21. https://www.sanskritum.com/2015/07/rishi-prajapati-parmeshthi-universe.html
22. https://www.swami-krishnananda.org/vishnu/nasadiya.pdf
23. https://www.sanskritexam.com/2021/09/nasadiya-sukta-sanskrit-hindi.html
24. https://archive.arunachala.org/docs/nasadiya-sukta/meaning
25. https://vivek-jivan.blogspot.com/2014/02/cosmology.html
26. https://vedaravindamu.wordpress.com/2011/10/11/origin-of-the-universe-nasadiya-sukta-of-rig-veda/



International Journal of Sanskrit Research
अनन्ता

ISSN: 2394-7519
IJSR 2024; 10(1): 144-148

www.anantaajournal.com
Received: 10-11-2023
Accepted: 15-12-2023

**गिरीशभट्टः बि**
Ph.D शोधच्छात्रः,
ज्यौतिष-वास्तुविभागः,
राष्ट्रियसंस्कृतविश्वविद्यालयः,
तिरुपतिः, आन्ध्रप्रदेशः, भारतम्

**गिरीशभट्टः बि**
Ph.D शोधच्छात्रः,
ज्यौतिष-वास्तुविभागः,
राष्ट्रियसंस्कृतविश्वविद्यालयः,
तिरुपतिः, आन्ध्रप्रदेशः, भारतम्

# केतकीग्रहगणितग्रन्थानुसारेण ज्योत्पत्तिगणितम्

## गिरीशभट्टः बि

**सारांश**
फलितज्यौतिषग्रन्थेषु विविधानि शुभाशुभफलानि कथितानि सन्ति । तेषां फलानाम् आदेशः ग्रहस्फुटानां लग्नादिभावस्फुटानाञ्च आधारेण क्रियते । ग्रहस्फुटानां लग्नादिभावस्फुटानाम् आनयनार्थं ज्यौतिषिकैः सिद्धान्तज्यौतिषम् अध्येतव्यं भवति । सिद्धान्तज्यौतिषस्य आधारेण ग्रहाणां लग्नादिभावस्फुटानाञ्च आनयनप्रक्रियायां ज्योत्पत्तेः सिद्धान्ताः प्रमुखपात्राणि वहन्ति । ग्रहस्फुटाः भावस्फुटाश्च स्फुटाः न भवन्ति चेत् फलादेशः अपि परिस्फुटः न भवति । ज्यागणितं विना स्फुटग्रहान् लग्नादिभावांश्च साधयितुं न शक्यते । अतः सिद्धान्तज्यौतिषे ज्योत्पत्तिः अत्यन्तं मुख्यः सिद्धान्तः भवति । अत एव सर्वेष्वपि सिद्धान्त-तन्त्र-करणग्रन्थेषु ज्योत्पत्तिविषयकाः सिद्धान्ताः प्रतिपादिताः सन्ति । अस्मिन् शोधपत्रे वेङ्कटेशकेतकर्महोदयैः केतकीग्रहगणिते प्रतिपादितान् ज्योत्पत्तिविषयकसिद्धान्तानधिकृत्य मया प्रतिपाद्यते ।

**कूटशब्दाः** ज्या, भुजज्या, कोटिज्या, चापः, केतकीग्रहगणितम्

**प्रस्तावना**
वेङ्कटेशकेतकर्महोदयैः शालिवाहनशकस्य अष्टादशतमशताब्द्यां 'केतकीग्रहगणितम्' इति एकः करणग्रन्थः विरचितः । अस्मिन् केतकीग्रहगणिते आहत्य एकादश अधिकाराः सन्ति – प्रास्ताविकाधिकारः, मध्यमाधिकारः, स्पष्टाधिकारः, पञ्चताराधिकारः, त्रिप्रश्नाधिकारः, चन्द्रग्रहणाधिकारः, सूर्यग्रहणाधिकारः, युत्यधिकारः, लोपदर्शनाधिकारः, शृङ्गोन्नत्यधिकारः, पाताधिकारः चेति । तत्र त्रिप्रश्नाधिकारे वेङ्कटेशकेतकर्महोदयेन ज्योत्पत्तिविषये किञ्चित् प्रतिपादितम् । किन्तु केतकर्महोदयैः सूर्यसिद्धान्त-सिद्धान्तशिरोमण्यादिषु ग्रन्थेषु यथा स्वीकृतं तथा ३४३८ मिता त्रिज्या न स्वीकृता । केतकर्महोदयैः १०००० मितां त्रिज्यां स्वीकृत्य तदनुसारं सूक्ष्मज्यासाधनसूत्रं कथितम् । एवं १०००० त्रिज्यायां साधितानि ज्याप्रमाणानि १ त्रिज्यायां परिणामनं कृत्वा पठितानि च । एतदधिकृत्य मया अस्मिन् शोधपत्रे प्रतिपाद्यते ।

**ज्यासाधनोपयुक्तानां भुजांशानां कोट्यंशानाञ्च साधनम्**
ज्यासाधनार्थमादौ भुजांशानां कोट्यंशानाञ्च साधनं कर्तव्यम् । भुजांशानां कोट्यंशानाञ्च साधनक्रमः वेङ्कटेशकेतकर्महोदयेन केतकीग्रहगणितस्य मध्यमाधिकारे कर्षसंस्कारनिरूपणावसरे एव उक्तः । तद्यथा –

त्रिभादल्पकेन्द्रं भुजः स्यात्तदेव
त्रिभोर्ध्वं नवान्तं विशेष्यं रसैस्तत् ।
नवभ्योऽधिको द्वादशभ्यो विशोध्यं
भुजोनं त्रिभं कोटिरित्युच्यते वै ॥[1]

इति ।

केन्द्रं त्रिभादल्पं (राशित्रयान्न्यूनं) भवति चेत् अर्थात् अभीष्टचापांशाः राशित्रयात् अल्पाः भवन्ति चेत् अभीष्टचापांशाः एव भुजांशाः भवन्ति । अभीष्टचापांशाः त्रिराशिभ्यः अधिकाः तथा षड्राशिभ्यः ऊनाश्चेत् षड्राशिभ्यः चापांशान् विशोध्य अवशिष्टांशाः भुजांशाः भवन्ति । अभीष्टचापांशाः ६ राशिभ्यः अधिकास्तथा ९ राशिभ्यः न्यूनाः भवन्ति चेत् चापांशेभ्यः राशिषट्कं विशोध्य अवशिष्टांशाः भुजांशाः भवन्ति । तथा अभीष्टचापांशाः ९ राशिभ्यः अधिकाः, १२ राशिभ्यः न्यूनाश्चेत् १२ राशिभ्यः चापांशान् विशोध्य अवशिष्टांशाः भुजांशाः भवन्ति । अभीष्टचापांशाः ३ राशयः (९० अंशाः) चेत् भुजांशाः नवत्यंशमिताः भवन्ति । ६ राशयः (१८० अंशाः) चेत् भुजांशाः शून्यमिताः भवन्ति । ९ राशयः (२७० अंशाः) चेत् भुजांशाः नवत्यंशमिताः भवन्ति । १२ राशयः (३६० अंशाः) चेत् भुजांशाः शून्यमिताः भवन्ति । राशित्रयात् भुजांशानां शोधनेन कोट्यंशाः लभ्यन्ते । भुजांशानां ज्या भुजज्या । कोट्यंशानां ज्या कोटिज्या । ओजपदयोः भुजज्यायाः वृद्धिः भवति । किन्तु युग्मपदयोः भुजज्यायाः ह्रासः भवति । यत्र भुजज्यायाः वृद्धिः भवति तत्र कोटिज्यायाः ह्रासः भवति । अतः ओजपदान्ते भुजज्या परमा भवति । कोटिज्या च शून्या भवति । युग्मपदान्ते भुजज्या परमा भवति । कोटिज्या च शून्या भवति । यत्र भुजज्यायाः वृद्धिः भवति तत्र भुजांशानामपि वृद्धिः भवति । यत्र कोटिज्यायाः वृद्धिर्भवति तत्र कोट्यंशानामपि वृद्धिः भवति । यत्र भुजज्या परमा भवति तत्र भुजांशाः अपि परमाः एव भवन्ति । यत्र कोटिज्या परमा भवति तत्र कोट्यंशाः अपि परमाः एव भवन्ति । यत्र कोटिज्या शून्यं भवति तत्र कोट्यंशाः अपि शून्यमेव भवति । इयमेव त्रिभादल्पकेन्द्रेतिश्लोकोक्तभुजसाधनविधेरुपपत्तिः ।
एवं भुजांशानां कोट्यंशानाञ्च साधनक्रमं मध्यमाधिकारे एव उक्त्वा तेषां भुजांशानां कोट्यंशानाञ्च वशात् ज्यासाधनं कथं कर्तुं शक्यते इति त्रिप्रश्नाधिकारे अधोनिर्दिष्टश्लोकद्वये वेङ्कटेशकेतकर्महोदयः प्रतिपादयति –

राश्यल्पे धनुषि ज्यकाकृतिरुपज्ञाता मयाऽत्रोच्यते
तर्काग्न्यश्विशरैर्लवीकृतधनुर्हत्त्वास्य खत्र्यंशकः ।
तर्काग्न्यश्विगुणाद् घनीकृतभुजात् त्रिंशद्घनाप्तेन वै
हीनश्चेदयुतोन्मिते त्रिभगुणे शेषं भुजज्या भवेत् ॥
खत्र्यंशाधिककार्मुके सति तु तत्कोटीदलज्याकृतिं
त्रिज्यार्धेन हरेत्फलेन रहिता त्रिज्येष्टदोर्ज्या भवेत् ।
प्रत्यंशं विगणय्य कार्मुकगुणान् छायादिकं तैः सुगण्
कर्ता चेद्गणितं लभेत स तदा लिप्तावधिं सूक्ष्मताम् ॥[2]

इति ।

यदि धनुः (चापः) ३० अंशेभ्यः न्यूनं भवति तदानीं भुजांशान् ५२३६ सङ्ख्यया सङ्गुण्य त्रिंशदंशेभ्यः विभजेत् । तदानीं यत्फलं लभ्यते तस्मात् २३६ सङ्ख्यया गुणितं भुजांशघनं त्रिंशद्घनेन भक्तं चेत् यत्फलं समुपलभ्यते तं फलं विशोधयेत् । तदानीम् अभीष्टचापांशानां ज्या १०००० त्रिज्यायां समुपलभ्यते । एवं लब्धां ज्यां दशसहस्रेण विभजामः चेत् रूपमितायां त्रिज्यायां ज्या समुपलभ्यते ।

$$\frac{\text{भुजांशाः} \times ५२३६}{३०^{\circ}} - \frac{\text{भुजांशाः}^{३} \times २३६}{३०}$$

=राश्यल्पे धनुषि १०००० त्रिज्यायाम् अभीष्टांशानां भुजज्याप्रमाणम्

$$\frac{\text{१०००० त्रिज्यायाम् अभीष्टांशानां भुजज्याप्रमाणम्}}{१००००}$$

= १ त्रिज्यायाम् अभीष्टांशानां ज्याप्रमाणम् (राश्यल्पे धनुषि)

यदि भुजांशाः त्रिंशदंशेभ्यः अधिकाः भवन्ति तदानीम् अनेनैव प्रकारेण ज्यासाधनं कर्तुं न शक्यते । तदानीं ज्यासाधनार्थं प्रकारान्तरम् आश्रयणीयं भवति । तद्यथा –
नवत्यंशेभ्यः भुजांशान् संशोध्य कोट्यंशाः साध्याः । तद्दलस्य ज्या साध्या । अस्य कृतिः त्रिज्यार्धेन विभाज्या । तदानीं यत्फलमुपलभ्यते तत्फलं त्रिज्यया विशोधयेत् । तदानीम् इष्टत्रिज्यायाम् अभीष्टांशानां दोर्ज्या लभ्यते ।

$$\text{त्रिज्या} - \frac{\frac{\{\text{ज्या } (९०^{\circ} - \text{भुजांशाः})\}^{२}}{२}}{\frac{\text{त्रिज्या}}{२}}$$

= अभीष्टत्रिज्यायाम् अभीष्टचापस्य दोर्ज्या । (३०° तः ९०° पर्यन्तम्)

[1] केतकीग्रहगणितम् – मध्यमाधिकारः – श्लोकसङ्ख्या २७

[2] केतकीग्रहगणितम् – त्रिप्रश्नाधिकारः – ९, १० श्लोकौ

एवं प्रत्यंशं विगणय्य अत्रोक्तविधिना चापस्य सूक्ष्मज्यानयनं कृत्वा अनेन यदि छायादिकं साध्यते तदानीं सद्गणकः तेषु छायादिप्रमाणेषु कलापर्यन्तं सूक्ष्मतां प्राप्नोति इति वेङ्कटेशकेतकर्महोदयः अस्य ज्यासाधनप्रकारस्य सूक्ष्मतां स्पष्टयति।

षष्ट्या गुणनभजनात् दशभिर्गुणनभजनम् अतीव सुकरं भवति । तस्मात् केतकरेण दशमांशपद्धत्या ज्यासाधनमुक्तम् । एषा ज्यासाधनविधिः ग्रन्थकर्त्रा केतकरेणैव उपज्ञाता । "बहुकालं मनः शरीरं च सम्पीड्य अन्ते २८ जुलईमासे शनिवासरे १८७७ ईसवीवर्षे[3] आषाढवद्यतिथौ १७९९ तमे शकवर्षे ईश्वरनामसंवत्सरे एषः ज्यासाधननियमः प्रकटीकृत इति आचार्याणामुल्लेखः"[4] इति केतकर्महाभागस्य तनयेन दत्तराजकेतकरेण केतकीग्रहगणितस्य केतकीपरिमलाख्यभाष्ये उल्लिखितः ।

उपर्युक्तनियममुपयुज्य केतकर्महोदयः पञ्च-पञ्चभागानां ज्यासाधनं कृत्वा ताः ज्याः त्रिषु दशमांशस्थानेषु, द्वयोः दशमांशस्थानयोश्च केतकर्महोदयेन पठिताः । तत्र त्रिषु दशमांशस्थानयोः पठितानां ज्यानां बृहज्ज्याः इति, एवञ्च द्वयोः दशमांशस्थानयोः पठितानां ज्यानां लघुज्याः इति केतकर्महोदयेन संज्ञा दत्ता । तत्र बृहज्ज्याः तु अनयोः श्लोकयोः केतकर्महोदयेन पठिताः–

खमश्वोरगा वेदसप्तेन्दवो वै नवाक्षाश्विनो द्व्यब्धिरामास्तदग्रे ।
त्रिपक्षाब्धयः पञ्चशत्योऽब्धिसप्तेषवो रामवेदर्तवोऽश्वाभ्रशैलाः ॥
षडङ्गाद्रयोऽर्केन्दुनागाः षडङ्गोरगाः षट्खनन्दाः खवेदग्रहाश्च ।
षडङ्गग्रहाः पञ्चनागग्रहाः षण्नवाङ्काः सहस्रं सहस्रांशजीवाः ॥[5]

इति ।

लघुज्याः च अधोनिर्दिष्टे श्लोके पठिताः –

खं नन्दाः सप्तचन्द्रास्तदनु रसकरा वेदरामा द्विवेदाः
पञ्चाशत् सप्तबाणास्तदनु युगरसा भूनगाः सप्तशैलाः ।
पक्षेभाः सप्तनागा उडुपतिनिधयो वेदनन्दा हयाङ्का
नागांशकाः सार्धगोऽङ्काः शतमिति च शतांशात्मिकाः स्युर्भुजज्याः ॥[6]

इति ।

एवं पठिताः लघुज्याः बृहज्ज्याः च अधोनिर्दिष्टे कोष्ठके प्रदत्ताः –

**कोष्ठकः १-** केतकीग्रहगणितोक्ताः बृहज्ज्याः लघुज्याः च

| क्र.सं. | भागाः | लघुज्याः | बृहज्ज्याः |
|---|---|---|---|
| ०. | ०° | .०० | .००० |
| १. | ५° | .०९ | .०८७ |
| २. | १०° | .१७ | .१७४ |
| ३. | १५° | .२६ | .२५९ |
| ४. | २०° | .३४ | .३४२ |
| ५. | २५° | .४२ | .४२३ |
| ६. | ३०° | .५० | .५०० |
| ७. | ३५° | .५७ | .५७४ |
| ८. | ४०° | .६४ | .६४३ |
| ९. | ४५° | .७१ | .७०७ |
| १०. | ५०° | .७७ | .७६६ |
| ११. | ५५° | .८२ | .८१९ |
| १२. | ६०° | .८७ | .८६६ |
| १३. | ६५° | .९१ | .९०६ |
| १४. | ७०° | .९४ | .९४० |
| १५. | ७५° | .९७ | .९६६ |
| १६. | ८०° | .९८ | .९८५ |
| १७. | ८५° | .९९५ | .९९६ |
| १८. | ९०° | १.०० | १.००० |

**स्थूलज्यासाधनम्**

एवं कथिताभ्यः ज्याभ्यः त्रैराशिकेन अभीष्टांशानां स्थूलज्यानां प्रमाणम् आनेतुं शक्यते । तथा च विलोमत्रैराशिकेन स्थूलचापानयनमपि आनयनं कर्तुं शक्यते । यद्यपि अयं क्रमः स्थूलः तथापि गणकानां सौकर्याय केतकर्महोदयः स्थूलज्यासाधनं स्थूलचापसाधनञ्च निरूपयति । स्थूलज्यानयनक्रमस्तु अधोनिर्दिष्टे कोष्ठके प्रतिपादितः –

शिलीमुखाप्ता किल बाहुभागास्तल्लब्धसङ्ख्या गतशिञ्जिनी सा।
यातैष्यजीवान्तरशेषघाताच्छिलीमुखाप्ता सहितेप्सिता स्यात् ॥[7]

[3] क्रिस्ताब्दे अथवा सामान्ययुगवर्षे) Common Era) इत्यर्थः ।

[4] केतकीग्रहगणितस्य त्रिप्रश्नाधिकारस्य ९,१० श्लोकयोः केतकीपरिमलभाष्यं द्रष्टव्यम् ।

[5] केतकीग्रहगणितम् – त्रिप्रश्नाधिकारः – ११, १२

[6] केतकीग्रहगणितम् – त्रिप्रश्नाधिकारः – श्लोकः १३

[7] केतकीग्रहगणितम् – त्रिप्रश्नाधिकारः – श्लोकसङ्ख्या १४

इति ।

चापप्रमाणं पञ्चभिः विभजेत् । तदानीं यत्फलं लभ्यते तत्तु गतज्यासङ्ख्या भवति । शेषं तु वर्तमानज्यायां गतचापांशाः । अनेन गतगम्यज्ययोरन्तरं गुण्यम् । पञ्चभिश्च भाज्यम् । तदानीं यत्फलं लभ्यते तत्तु गतज्याप्रमाणे योज्यम् । तदानीम् ईप्सिता स्थूलज्या लभ्यते ।

**स्थूलचापसाधनम्**

स्थूलचापसाधनक्रमः केतकर्महोदयेन अधोनिर्दिष्टे श्लोके प्रतिपादितः –

ज्यां प्रोज्झ्य नाराचहतावशेषं यातैष्यजीवाविवरेण भक्तम् ।
विशोधनीया यतमाऽत्र तद्वैः शिलीमुखैस्तत्सहितं धनुः स्यात् ॥[8]

इति ।

**भुजकोटिज्ययोः धनर्णत्वम्**

भुजज्यानां कोटिज्यानां च धनर्णत्वं केतकर्महोदयेन अधोनिर्दिष्टे श्लोके प्रतिपादितम् –

धनुष्यजाद्यं तु धनं भुजज्या क्षयस्तुलाद्ये रसभे भवेत्सा ।
कोटीज्यका स्वं मकरादिषड्भे क्षयः कुलीरादिषु षड्गृहेषु ॥[9]

इति ।

मेषादिराशिषट्के (०°तः १८०°पर्यन्तं) भुजज्या धनं (+)भवति । तुलादिराशिषट्के (१८०°तः ३६०° पर्यन्तं) भुजज्या ऋणं (-) भवति । तथा मकरादिराशिषट्के (२७०° तः ९०° पर्यन्तं) कोटिज्या धनं (+) स्यात् । कर्कटादिराशिषट्के (९०°तः २७०° पर्यन्तं) कोटिज्या ऋणं (-)भवति ।

**निष्कर्षः**

अस्मिन् शोधपत्रे वेङ्कटेशकेतकर्महोदयैः केतकीग्रहगणिते प्रतिपादिताः ज्योत्पत्तिविषयकसिद्धान्ताः प्रतिपादिताः । यद्यपि प्राचीनैः आचार्यैरपि ज्यासाधनप्रकाराः प्रतिपादिताः तथापि केतकर्महोदयेन स्वयम् अनुसन्धानं कृत्वा कथितः ज्यासाधननियमः अत्यन्तं महत्त्वपूर्णः अस्ति । केतकर्महोदयेन महता प्रयासेन अन्वेषितः ज्यासाधननियमः सिद्धान्तज्यौतिषशास्त्रे, विशेषतः ज्योत्पत्तिक्षेत्रे महत्त्वपूर्णम् अनुसन्धानम् अस्ति इति निष्कर्षं दातुं शक्नुमः ।

[8] केतकीग्रहगणितम् – त्रिप्रश्नाधिकारः – श्लोकसङ्ख्या १५

[9] केतकीग्रहगणितम् – त्रिप्रश्नाधिकारः – श्लोकसङ्ख्या १६

**सन्दर्भग्रन्थसूची**


1. अर्वाचीनं ज्योतिर्विज्ञानम्; ग्रन्थकर्ता – श्रीरमानाथसहायः; प्रकाशनवर्षम् – सा.यु.१९९६; प्रकाशनसंस्था – सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी
2. ज्योतिर्विज्ञानम्; ग्रन्थकर्ता – धूलिपाल अर्कसोमयाजी; प्रकाशनवर्षम् – सा.यु.१९६४; प्रकाशनसंस्था – सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी
3. "ज्या-सिद्धान्ताः" Formulas of Sine; सम्पादकः – पं. शिवचरणशास्त्री; प्रकाशनवर्षम् – सा.यु.२०१४; प्रकाशनसंस्था – राष्ट्रियसंस्कृतसाहित्यकेन्द्रम्, जयपुरम्
4. म०म०बापूदेवशास्त्रिकृता सरलत्रिकोणमितिः; सम्पादकः – पण्डितश्रीगोविन्दपाठकः; प्रकाशनवर्षम् – सा.यु.२००२; प्रकाशनसंस्था – सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी
5. म०म० बापूदेवशास्त्रिकृता सरलत्रिकोणमितिः (संस्कृत-हिन्दीव्याख्योपेतम्); व्याख्याकारः – पं.सत्यदेवशर्मा; संस्करणवर्षम् – सा.यु.२०१२; प्रकाशनसंस्था – चौखम्बा सुरभारती प्रकाशनम्, वाराणसी
6. पं. बलदेवमिश्रकृता सरलत्रिकोणमितिः; व्याख्याकारः सम्पादकश्च – डॉ.कमलाकान्तपाण्डेयः; प्रकाशनवर्षम् – सा.यु.२००७; प्रकाशनसंस्था – शारदासंस्कृतसंस्थानम्, वाराणसी
7. चन्द्रगोल-विमर्शः; ग्रन्थकर्ता – रामचन्द्रपाण्डेयः; संस्करणवर्षम् – सा.यु.२०१०; प्रकाशनसंस्था – केन्द्रीयसंस्कृतविश्वविद्यालयः, नवदेहली
8. ज्योतिष-सिद्धान्त-मञ्जूषा; ग्रन्थकर्ता – डॉ.विनयकुमारपाण्डेयः; संस्करणवर्षम् – सा.यु.२०२०; प्रकाशनसंस्था – चौखम्बा सुरभारती प्रकाशनम्, वाराणसी
9. सिद्धान्तशिरोमणेर्गोलाध्यायस्योपपत्तिः – लेखकः – डॉ. प्रेमकुमारशर्मा, संस्करणम्: सा.यु.२००५, प्रकाशनसंस्था – नागप्रकाशनम्, नवदेहली
10. श्रीमद्भास्कराचार्यप्रणीतः सिद्धान्तशिरोमणिः – स्वोपज्ञवासनाभाष्यसंवलितो नृसिंहदैवज्ञकृतवार्त्तिकोपेतश्च – सम्पादकः – डॉ. मुरलीधरचतुर्वेदः; तृतीयं संस्करणम्; संस्करणवर्षम् – सा.यु.२०१०; प्रकाशनसंस्था – सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

11. मन्दशीघ्रफलसाधनसमीक्षा; ग्रन्थकर्ता – विद्यावाचस्पतिः डॉ.रामजीवनमिश्रः; प्रथमसंस्करणम् – सा.यु.२००५; प्रकाशनसंस्था – ठाकुरप्रकाशनम्
12. म.म.पं.सुधाकरद्विवेदिविरचितं दीर्घवृत्तलक्षणम्; सम्पादको व्याख्याकारश्च – डॉ. चन्द्रमा पाण्डेयः; प्रथमसंस्करणम् – सा.यु.२००६; प्रकाशनसंस्था – शारदासंस्कृतसंस्थानम्, वाराणसी
13. ग्रहनक्षत्राणि; ग्रन्थकर्ता – डॉ. सम्पूर्णानन्दः; अनुवादकः सम्पादकश्च – पण्डितश्रीकमलापतिमिश्रः; प्रकाशनवर्षम् – सा.यु.२०१६; प्रकाशनसंस्था – सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी
14. सुराकान्तसङ्कलितः ज्योतिर्विज्ञानशब्दकोषः; लेखनं सम्पादनञ्च – डॉ.सुराकान्तझा; प्रथमं संस्करणम्; संस्करणवर्षम् – सा.यु.२००९; प्रकाशनसंस्था – चौखम्बा कृष्णदास अकादमी, वाराणसी
15. सूर्यसिद्धान्तः (आर्षग्रन्थः); व्याख्याकारः – श्रीकपिलेश्वरशास्त्री; संस्करणवर्षम् – सा.यु.२०१५; प्रकाशनसंस्था – चौखम्भा संस्कृतभवनम्, वाराणसी
16. म.म.सुधाकरद्विवेदिप्रणीतया ‘सुधावर्षिणी’टीकया संवलितः सूर्यसिद्धान्तः; सम्पादकः – विद्यावारिधिः श्रीकृष्णचन्द्रद्विवेदी; द्वितीयं संस्करणम्; संस्करणवर्षम् – सा.यु.२०१६; प्रकाशनसंस्था – सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी
17. स्वकृतया अङ्कविवृतिव्याख्यासहितं सपरिशिष्टं ‘केतकीग्रहगणितम्’ – श्रीवेङ्कटेशतनयश्रीदत्तराजविरचितेन केतकीपरिमलेन वासनाभाष्येण समुल्लसितम्; ग्रन्थकर्ता – श्रीवेङ्कटेशकेतकर्; तृतीयं संस्करणम्; संस्करणवर्षम् – सा.यु.२०१४; प्रकाशनसंस्था – भारतीयविद्याप्रकाशनम्, नवदेहली
18. भारतीयज्यौतिषे संस्थानविद्या; अन्वेषकः लेखकश्च – प्रो.सच्चिदानन्दमिश्रः; सम्पादकः – डॉ.शिवाकान्तमिश्रः; प्रथमसंस्करणम् – सा.यु.२०१७; प्रकाशनसंस्था – भारतीयविद्यासंस्थानम्, नवदेहली

International Journal of Sanskrit Research 2024; 10(1): 152-153





ISSN: 2394-7519
IJSR 2024; 10(1): 152-153

www.anantaajournal.com
Received: 13-11-2023
Accepted: 18-12-2023

**Dhanyasree KU**
Research Scholar, Department of Sanskrit General, SSUS, Kalady, Kerala, India

**Corresponding Author:**
**Dhanyasree KU**
Research Scholar, Department of Sanskrit General, SSUS, Kalady, Kerala, India

# वृक्षायुर्वेदे त्रिदोषसिद्धान्तः

**Dhanyasree KU**

**प्रस्तावना**

भारतीय विज्ञान राशिनां भण्डागारो भवन्ति वेदाः। आयुर्वेदः भारतीय वैद्यशास्त्रं अस्ति। आयुस्सम्बन्धः वेदोऽस्ति आयुर्वेदः। चरकसंहितायां आयुर्वेदस्य लक्षणं इत्थं उपपादितोऽस्ति।

हिताहितं सुखं दुःखं
आयुस्तस्य हिताऽहितम्।
मानं च तत् यत्रोक्तं
आयुर्वेदः स उच्यते।। १

हितं अहितं सुखं दुःखं आयुः, तस्य हिताऽहितं, आयुः प्रमाणं इमानि यत्र प्रतिपादयति तस्य शास्त्रस्य नाम आयुर्वेदमिति उच्यते। आयुर्वेदः ऋग्वेदस्य उपवेदोऽस्ति इति केचन अभिप्रयन्ति एवं अथर्ववेदस्य उपवेदोऽस्ति इति केचन, एवं अभिप्रायद्वयं अधूनापि स्तः। भारतवर्षे यथा मानवानां चिकित्सायै आयुर्वेदशास्त्रं आसीत् तथैव पक्षिमृगादिनां, सस्यानां चिकित्सायै च आयुर्वेदशास्त्रमसीत्। अश्चायुर्वेदं, हस्त्यायुर्वेदं, वृक्षायुर्वेदः एते उदाहरणत्वेन वक्तुं शक्यते। वैदिक कालादारभ्य यथा जन्तु समूहः तद्वत् सस्यानां अपि जीवः अस्ति इति विश्वासमासीत्। वृक्षायुर्वेदे बीजवपनं, सस्यरोपणं, जलसिञ्चनरीतिः, ऊर्वारूकप्रयोगः कूणपजलं, उद्यानिर्माणं, वृक्षारोपणमहत्वं, गृहं परितः रोपणीयाः शुभाऽशुभवृक्षाः, सस्यानामत्भूतगुणाः, बीजसंरक्षमार्गाः, बीजपवनाय शुभनक्षत्राणि इत्यादयाः प्रतिपादिताः। भारतीय विज्ञानशाखासु अत्यन्तं प्राधान्यमस्य अस्ति। वृक्षलतादीनां चिकित्साविधीनां निर्देशेन साकं प्रकृतेः सन्तुलनावस्थायाः परिरक्षणेमुख्यत्वमपि शास्त्रेऽस्मित् प्रत्यपादयत्। नवीन शोधकर्तृभ्यः उपकारकाः विभिन्नाः विद्याः अपि अत्रान्तर्भवन्ति। आयुर्वेदशास्त्रस्य उद्भवानन्तरमेव वृक्षायुर्वेदनामकशास्त्रशाखायाः अविर्भावः जातः इति मन्यते। क्रिस्तोः पूर्वं 500 शताब्दे शास्त्रोऽयं स्वतन्त्रशास्त्रत्वेन स्वरूपं प्राप्तम्। २

सस्यानां वृद्धये विकासाय च मृत्जलप्रकाशवाव्यादियुक्तवातावरणं मुख्यभूतं अस्ति। मनुष्याणां मुखमिव वृक्षमूलं तु कल्प्यते। सस्यलतादयः मूलेनैव जलं पोषकञ्च स्वीकुर्वन्ति। पादपः पादेन पिबति इत्यस्मात् पादपः भवति एवं अमरकोशं, मेधिनिकोशं, वाचस्पत्यं एतेषु ग्रन्थेषु उक्तमस्ति। स्वीकृतजलपोषकादयः सर्वासु शाखासु पर्णेभ्यश्च प्रददाति। एवं सूर्यप्रकाशस्य वायोः च साहाय्येन भोजनत्वेन परिवर्तयाति। एवं विकासमाप्नोति च। उष्णं स्पर्शः प्रकाशः एतेभ्यः सस्यानि सोचितसम्बन्धं प्रदर्शयति। मनुष्याणामिव सस्यानामपि बाल्ययौवनवार्धक्यादि अवस्थाः विकासस्य विविधेषु समयेषु दृश्यते। सस्यानां आयुषः नियन्त्रणं प्रकाशजलभोजनादीनां सम्यक्योगेन सम्भवन्ति। तेषां प्रतिरोध शक्तेः उतः आरोग्यस्य निदानं प्राप्यमाणपोषकाणां उपलब्दिरेव। तेषु जायमानव्रणाः तेषां आरोग्येण अतः रोगप्रतिरोधशक्तेः कारणात् निर्गच्छन्ति। एवं प्रकारेण प्रकृतिमनुसृत्य तथा च सम्बन्धं प्राप्यैव सस्यलतादयः जीवन्तः सन्ति।

यथा मनुष्येषु त्रिदोषाणामवस्थाभेतेन रोगाः आयान्ति सा एव स्थितिः वृक्षलतादीनामपि । वातपित्तकफादित्रिधातूनां न्यूनाधिक्यादेव रोगाः सञ्जायन्ते इति वृक्षायुर्वेदे समसूचयत्। आयुर्वेदशास्त्रे पृथ्व्यप्तेजोवाय्वाकाशादयः पञ्चभूतान् वातापित्तकफरूपेण त्रिधा विभक्तामस्ति एते वातापित्तकफाः त्रिदोष नाम्नि प्रतिद्धोऽस्ति। एते त्रिदोषः शरीरभागान् निर्माति, धरति, तत्रस्थजैवधर्मान् प्रवर्तयति च। अनेनकारणेन एते त्रिधातवः इत्या नामान्तरेण प्रसिद्धोस्ति। एते पञ्चभूतात्मकाः सन्ति। पञ्चभूतसिद्धान्तानुसारं आकाशावाय्वोः आधिक्येन वातः तेजसः आधिक्येन पित्तः, पृथ्वीजलयोः अधिक्येन कफश्च समजायते। रोगरहिताशरीरस्य शरीरधर्मान् इमे त्रिधातवः निर्वहन्ति। शरीरस्यास्य प्रतिरोधशक्तेः संरक्षणं त्रिदोषे एव अन्तर्निहिताऽस्ति। एतेषां त्रिदोषाणां समस्थितिरेव आरोग्यमित्युच्यते। त्रिधातूनां केचनभागाः आहारादिभिः विहारादिभिश्च क्षयवृद्धिश्चाप्नुवन्ति। त्रिदोष विषमस्थितिः वा क्षयवृद्धिर्वा अनारोग्यावस्थां जनयति।

तरूषु त्रिदोषसम्बन्धेनैव रोगमागच्छन्ति। विषयोऽयं सुरपालस्य वृक्षायुर्वेदे, शाङ्र्गधरसंहितायां, बृहत्संहितायां, काश्यपसंहितायां, विष्मुधर्मोत्तरपुराणे च समचर्चयत्। एतेष्वपि सुरपालस्य वृक्षायुर्वेदे अधिकतया विवरणं प्रदत्तमिव दृश्यते। त्रिदषसम्बन्धतया रोगोत्पत्तेः कारणानि, लक्षणानि, चिकित्साविधयः एते विषयाः ग्रन्थेऽस्मिन् सुव्यक्तमुक्तमस्ति। अस्मिन् वृक्षायुर्वेदे त्रयोदश अध्यायाः सन्ति। रोगज्ञानो नामकष्टमध्याये एवं रोगोपशमन नामक नवमाध्याये च चिकित्सा एवं त्रिदोषमम्बद्ध रोगाणां

निवारणामार्गाश्च विशिष्यप्रतिपादितोऽस्ति।रोगज्ञनाध्याये यथा अध्याय नाम समसूचयत् तथैव सस्येषुजायमानविविधरोगाणां कारणानि लक्षणानि च विवृतम्। अस्मिन् अध्याये एकादशश्लोकैरेव विषयोऽयं सङ्कलितोऽस्ति। आदौ सर्वेषुसस्येषुजायमानान् रोगान् द्विधाविभक्तोऽस्ति शरीरमागन्तुकमिति। शरिरान्तर्गतरोगान् शारिरकं एवं शरीरात् बहिः जायमानस्तु आगन्तुकमिति उत्कं मुनिना सुरपालेन।

शारीरागन्तुभेदेन द्विप्रकारः समासतः।
सर्वभूरूहजतिनामातङ्कः परिकीर्त्तितः।।[3]
तत्र वातात् कफात् पित्ताच्छारीराणां समुद्भवः।
आगन्तूनां समूत्पत्तिः कीडशीतादिभिर्भवेद्।।[4]

वातरोगस्योत्भवस्तु रूक्षयुतंमेवंकाषाययुतद्रवैः सिञ्चनं भूमौ जलाभावः अनयोः कारणयोरेव संजायते।

रूक्षकषायादिद्रव्यैरत्यर्थसोचितैः ।
भूमिसंशोषणात् वृक्षे भवन्त्यनिलजा गदाः।।[5]

कृशत्वं अवनमनत्वं, स्थूलत्वं, पिटकत्वं, पर्णानामतिविकासः, परूषत्वं, फलानां रूच्यभावः एते वातसम्बन्धरोगलक्षणानि।
कफजन्यरोगाः हेमन्ते, वसन्ते च जायन्ते। कफजन्यरोगाणामागमनं तु रूचियुत्क, स्निग्ध , अम्लता, शतियूक्तैः द्रवैः सिञ्चनादेव समजायन्ते। विलम्बेन फलागामः, पाण्डुत्वं,कुब्जपत्रता, विकासराहित्यं, फलानांरूच्यभावः एते एव कफजन्यरोगाणां लक्षणानि।

स्वादुस्निग्धाम्लशीतार्देद्रव्यैरत्यथसेचितैः।
हिमगमे वसन्ते च भवन्ति कफजा गदाः।।[6]
ते चातिकालफलता पाण्टुत्वं कुब्जपत्रता।
अवृद्धिः फलितानं नीरसता चेति कीर्तिताः।।[7]

पित्तजन्यरोगाणां उद्भवः कट्वम्ललवणतीष्णद्रव्यैः अधिकतया सेचनकारणदेव। ग्रीष्णकाले वर्षान्ते च पित्तजन्यरोगाः समायान्ति। पर्णानां पीतवर्णत्वं अकालेफलानां पतनं, फलशुष्कत्वं, विशोषणं, पर्णपुष्पफलानां सदनं पतनं इत्यादयः रोगलक्षणानि भवन्ति।

कट्वम्लवर्णैस्तीक्ष्णैर्द्रवैरत्यर्थसेचितैः।
भवन्ति पित्तजा रोगा ग्रीष्मकाले घनात्यये। [8]
ते पीतपत्रताकालफलस्राव विशोषणम्।
पत्रपुष्पफलम्लानिः सदनं चेति कीर्तिताः।। [9]

यदि कफं मलिनं जायते तर्हि वृक्षात् द्रवमायाति वातजन्यादयः रोगाः अयदार्थपरिचरणेन जायन्ते। सस्येभ्यः पाण्डुरोगागमनं वातादिनांकोपादेव भवति। पाण्डुरोगबाधितसस्यानिस्तु पीतवर्णकाष्टयुक्ताः एवं पीतवर्णलयुताश्च भवन्ति।

क्रुद्धा वातादयो दोषाः पाण्डुरोगं प्रकुर्वते।
तेनार्त्ताः शाखिनः सन्ति पाण्डुस्कन्धफलच्छदाः।। [10]

सस्येषु वन्ध्यता बीचदोषात् तथा परिचरणाभावात् उत दोषयुक्तपरिचरणेनेव वा दुष्टवृत्या वा वातादीनां कोपात् वा सम्भवन्ति।

बीजस्य दोषादकृतोपचाराद्।
मिथ्योपचारादपचारतो वा।।
क्रुद्धाः प्रकुर्वन्ति समीरणाद्या
वन्ध्यानशेषानवनीरूहांश्च।। [11]

रोगोपशमनाध्याये सस्यवृक्षलतादीनां वातकफपित्तजन्यानां रोगाणां चिकित्सारीतिः प्रतिपादयन्ति। मांसमेदोघृतकूपजलनिम्बादयः गोश्टङ्गः, अश्वरोमः, मत्स्यतैलं, वराहमेदः एते एव वातजन्य रोगनिवारणाय उपयुक्ताः भवन्ति। कफजन्यरोगवारणाय कषायतिक्तकटूयुक्तद्रव्याणि, पञ्चमूलाः, त्रिफला, सर्वतोभद्रपाटलगाणिकारिकस्योनक, सितसर्षपचूर्णं , तिलोदकं एतेएव निर्दिष्ठाः सन्ति। सर्वविधकफजन्यरोगानपाकर्तुं सितसर्षपचूर्णं वृक्षाणां मूले अधोभागे संस्थाप्य तिलोदकैः सिञ्चतिचेत् पर्याप्तमिति निरदिशत्।

सितसर्षपकल्कं च मूले दत्वा निषेचयेत्।
तिलभूतिजलैः सर्वकफरोगनिवृत्तये।। [12]

वातजन्यरोगायुक्तानां वृक्षाणां मूलभागात् मृन्निवार्य तत्र नूतनमृत्स्थापयेत् इति निरदिशत्। पित्तजन्यरूक्निवारणाय मधुयुक्तक्षीरैः यष्टीमधुमधूकजैः सेचनेन रोगामुक्तिस्सम्भवेत। विनेदं फलत्रिफलजैः साकं मधु घृतं च संयोज्य जलं उष्णीकृत्य तेन जलेन सिञ्चति चेत् पित्तसमुद्भावात् समस्त रोगान् मुच्यते।
पाण्डुरोगशमनाय यवगोधूमसम्भूतचूर्णैः मधुक्षीरवारिः च योजयितवा सप्ताहमेकं यावत् सिञ्चयेत् इत्यादिशत्।

यवगोधूमसम्भूतचूर्णक्षौद्रपयोम्भसाम्।
सेकैः सप्ताहमात्रेण पाण्डूरोगः प्रशाम्यति। [13]

धातूत्रयाणामसाम्येन यथा मानवेषु रोगाः जायन्ते तथैव द्रुमलतादीनामपि रूगागमनम्। सुरपालमुनेः वृक्षायुर्वेदे सविस्तरं प्रत्यपादयत् यत् वृक्षाणां रोगकारणलक्षणचिकित्साविधयस्सर्वे धातुत्रयाणां अभावेन इति स्पष्टमेव।

## End Notes
1. Charakasamita, Vol.1, Part1, Pg.13.
2. Vrksayurvea in Ancient India P.11
3. Vrksayurveagranthangal Oru Padanam, P.172.
4. 4.Surapalas Vrksayurveda, p.19.
5. Vrksayurveagranthangal Oru Padanam, P.172.
6. Ibid, P.173
7. Ibid, P. 173.
8. Ibid, p.173
9. Ibid, p.173
10. Ibid, p.173
11. Ibid, p.175
12. Ibid, p.176
13. Ibid, p.180

## ग्रन्थसूचि

1. चरकसंहिता, ब्रह्मानन्द त्रिपाठी, चौखम्बा सुरभारती प्रकाशन, वाराणसी, २०१२, Vol.1, Part 1.
2. Asian Agri History oundation, Secondarabad; c2011.
3. Sadhale Nalini, Vishavallabha, Asian Agri History Foundation, Secondarabad; c2004.
4. Sadhale Nalini Scarepalaes Vrksayurveda; c1996.
5. Lallanj Gpal, Vrksayurveda in Ancient India, Sandeep Prakasan, New Delhi; c2000.
6. Vrksayurvedagranthangal Oru Padanam, Dr. N.P. Unnithiri, Kerala Bhasa Institute Thiruvananthapuram; c2007.



International Journal of Sanskrit Research

अनन्ता

ISSN: 2394-7519
IJSR 2024; 10(1): 159-163

www.anantaajournal.com
Received: 04-12-2023
Accepted: 07-01-2024

शौभिकविश्वासः
सहकारी-अध्यापकः संस्कृतविभागः
झाड़ग्राम-राज-कलेजः झाड़ग्रामः,
पश्चिमवङ्गराज्यम्, भारत

Corresponding Author:
शौभिकविश्वासः
सहकारी-अध्यापकः संस्कृतविभागः
झाड़ग्राम-राज-कलेजः झाड़ग्रामः,
पश्चिमवङ्गराज्यम्, भारत

# मायाः तोलनात्मकम् अध्ययनमेकम् आर्हताद्वैतवेदान्तदर्शनसिद्धान्तानुसारम्

**शौभिकविश्वासः**

**सारांश**
एतद् सर्वैरविदितं यत् मायेति तत्त्वमद्वैतवेदान्तिभिः प्रतिष्ठितम्। परं तत्त्वमिदं न केवलमद्वैतवेदान्ते स्वीकृतम्, अपि च अन्येषु दर्शनेषु अस्य तत्त्वस्य प्रसङ्गः वर्तते, केवलं तत्र नामान्तरमेव परिदृश्यते। जैननये अपि मायातत्त्वस्य विचारणा विद्यते । अस्मिन् शोधप्रबन्धे एषा चर्चा उपन्यस्ता यत् अद्वैतवेदान्तदर्शने यादृशी मायाचर्चा परिदृष्टा, तादृशी माया जैनाचार्यैः स्वीकृता न वा । अपि च जैनदर्शने माया इति कः वस्तुः, वैदान्तिकैः सह तेषां जैनानां स्वीकृतं मायातत्त्वं समरूपं , विषमरूपं वा । अतः अत्र समीक्षात्मिका दृष्ट्या वेदान्तजैनदर्शनयोः मायातत्त्वं पर्यालोचितम्।

**शोधप्रविधिः** अस्मिन् शोधप्रबन्धे प्राधान्येन तुलनात्मिका विश्लेषणात्मिका पद्धतिः च समाश्रिता। जैनाद्वैतवेदान्तदर्शनाभ्यां तत्त्वानि संगृह्य अत्र तुलनात्मिका विचारणा आहृता। उभययोः दर्शनयोः प्रकरणग्रन्थान् समाश्रित्य एताः सर्वाः चर्चाः उपन्यस्ताः। परामृष्टानां ग्रन्थानां उल्लेखे प्रायेण एम.एल.ए. सरणिः अनुसृता। तद्यथा - संघवी,सुखलालः। सं.। तत्त्वार्थसूत्रम् । पार्श्वनाथविद्यापीठः। वाराणसी। २०१९ (अष्टम-संस्करणम्) । शोधप्रबन्धे उद्धृतयः सर्वाः ग्रन्थस्य पृष्ठासंख्यकेन चिह्निताः भवन्ति। तद्यथा (संघवी,सुखलालः। पृः १११।)। शोधप्रबन्धे समुल्लिखितानां संक्षेपाक्षराणां अर्थानां निर्देशिनी अपि विवृता।

**कूटशब्दः** माया, बन्धः, पुद्गलः, ज्ञानावरणम्, आस्रवः, कर्म, अज्ञानम्, कषायः

**संक्षेपाक्षरार्थनिर्देशिनी**
श्वेः उः – श्वेताश्वतरोपनिषद्
पृः – पृष्ठा

## प्रस्तावना

तत्त्वार्थसूत्रकारेण उमास्वातिना तस्य तत्त्वार्थसूत्रे रत्नत्रयप्रसङ्गेन उक्तं – "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः।" (संघवी,सुखलालः। पृः १११।) अतः रत्नत्रयं भवति सम्यक्दर्शनं सम्यक्ज्ञानं सम्यक्चारित्रं च, तदेव मोक्षमार्गम्। अत्र सम्यग्ज्ञानं नाम – येन स्वभावेन जीवादयः पदार्थाः व्यवस्थिताः, तेनैव स्वभावेन मोहसंशयरहितत्वेन पदार्थानामवगमनं सम्यग्ज्ञानम्। सर्वदर्शनसंग्रहकारेण माधवाचार्येणोदाहृतं –

"यथावस्थिततत्त्वानां संक्षेपाद्विस्तरेण वा ।
यः अववोधस्तमत्राहुः सम्यग्ज्ञानं मनीषिणः ।।"
(चक्रवर्ती, सत्यज्योतिः। पृः२०।)

येन स्वभावेन जीवादयः पदार्थाः व्यवस्थिताः भवन्ति, मोहसंशयविरहितानां तद्रूपेण तेषां पदार्थानां ज्ञानमेव सम्यक्ज्ञानम्। तत्त्वानि येन रूपेण स्थितानि तद्रूपेण तत्त्वानां संक्षेपेण विस्तृतरूपेण वा तज्ज्ञानं सम्यकज्ञानं इत्यभिधीयते।

अतः साधारणतया पदार्थानां तत्त्वानां सम्यक्ज्ञानं न भवति। अन्यस्वभावेन तानि सर्वानि तत्त्वानि आवृतानि भवन्ति । यदा तदावरणं विनश्यति तदा सम्यक्ज्ञानं भवति। जैननये सम्यक्ज्ञानं पञ्चविधं, तदुक्तं तत्त्वार्थसूत्रे – "मतिश्रुतावधिमनःपर्यायकेवलानि ज्ञानम् इति।" (संघवी,सुखलालः।पृः१११।)। सर्वदर्शनसंग्रहकारेणापि उक्तं - "तज्ज्ञानं पञ्चविधं मतिश्रुतावधिमनःपर्यायकेवलभेदेन।"(चक्रवर्ती, सत्यज्योतिः। पृः२०।), अस्यार्थः ज्ञानावरणक्षयोपशमे सति इन्द्रियमनसा पुरस्कृत्य व्यापृतः सन् यथार्थं मनुते सा मतिः। ज्ञानावरणक्षयोपशमे सति मतिजनितं स्पष्टं ज्ञानं श्रुतम्। सम्यद्दर्शनादिगुणजनितक्षयोपशमनिमित्तम् अवच्छिन्नविषयं ज्ञानमवधिः। ईर्षाद्यन्तराय ज्ञानावरणक्षयोपशमे सति परमनोगतस्यार्थस्य स्फुटं परिच्छेदकं ज्ञानं मनःपर्यायः। तपःक्रियाविशेषान् यदर्थं सेवन्ते तपस्विनस्तज्ज्ञानमन्यज्ञानासंस्पृष्टं केवलम्। तत्र – आद्ये परोक्षं, प्रत्यक्षमन्यत्। सर्वदर्शनसंग्रहकारेण माधवाचार्येणोदाहृतं –

"विज्ञानं स्वपराभासि प्रमाणं वाधवर्जितम् ।
प्रत्यक्षं च परोक्षं च द्विधा मेयविनिश्चयात् ॥"

(चक्रवर्ती, सत्यज्योतिः। पृः२०।)

अतः मतिः श्रुतः अवधिः मनपर्यायः केवलश्च इति पञ्चविधं सम्यकज्ञानं भवति। ज्ञानावरणयोः क्षयोपशमे सति इन्द्रियेण मनसा च यः प्रथमः बोधः जायते, स तावत् मतिः। ज्ञानावरणयोः क्षयोपशमे मत्या यद् स्पष्टज्ञानं जायते तद् श्रुतम्। सम्यग्दर्शनेन ज्ञानावरणयोः क्षयोपशमे स्थानकालाद्यवच्छिन्नं सीमितं वस्तुविषयकं ज्ञानं भवति अवधिः। ईर्षादयः ज्ञानावरकाः भवन्ति इति जैनाः मन्वन्ति। तेषामिर्षादीनां क्षयोपशमे अन्येषां मनःस्थितानां विषयानां यद् स्पष्टं ज्ञानमुदेति तज्ज्ञानं मनःपर्यायः इति अभिधीयते। अन्येषां सर्वेषां ज्ञानानां असहायेन स्वतन्त्रतया यद् स्वयं- प्रकाश्यं निर्वाधं ज्ञानमुत्पद्यते तद् भवति केवलज्ञालम्। अतः केवलज्ञानं विना अन्येषु चतुर्विधेषु ज्ञानेषु ज्ञानावरणप्रसङ्गः भवति। ज्ञानावरणः नाम ज्ञानस्य वाधः । अत्र ज्ञानमित्यनेन मननमिति विवक्षितम्। वाचकाचार्येण तत्त्वार्थसूत्रे ज्ञानावरकाणां षड्विधानां कर्मणां उपदिष्टम् –

"तत्प्रदोषनिह्नवमात्सर्यान्तरायासादनोपघाता ज्ञानदर्शनावरणयोः"

(संघवी, सुखलालः। पृः १२६ ।)

एतेभ्यः कर्मभ्यः ज्ञानावरणं जायते । सम्यक्ज्ञानेन तदावरणस्य क्षये प्रयत्नेन तस्योपशमे मननादिकं ज्ञानं उत्पद्यते। अतः ज्ञानावरणतत्त्वं जैनाः अपि स्वीकुर्वन्ति।
जैनदार्शनिकाः चिदचिदिति तत्त्वद्वयं स्वीकुर्वन्ति। तन्मते ये तावत् ग्रहणीयाः ते ग्राह्याः, ये तावत् त्यजनीयाः ते सर्वे हेयाः इति विचार्यन्ते। ग्राह्यहेययोः भेदज्ञानमेव यथार्थज्ञानं विवेकज्ञानं वा। कर्तुः रागद्वेषादीन् सर्वथैव सर्वदैव परिहर्तव्यम्। कारणम् एतस्मात् कारणादेव जायते अविवेकिता अयथार्थज्ञानं वा। अतः जैनाः ज्ञानावरणं स्वीकुर्वन्ति। ते मन्वन्ते आत्मा कर्म च परस्परं भिन्नरूपम्। केनापि कारणेन आत्मा कर्मणा सह यदा एकीभूतः भवति तदा अविवेकः भवति । जीवाः प्रकृत्या चैतन्यस्वरूपाः भवन्ति। यस्मात् कारणात् कर्मणः स्वशक्त्या उपशमेन क्षयेन वा औपशमिकात्मभावेन क्षयात्मकभावेन वा कर्मोदयवशेन सर्वं कालुष्यं विनश्यति । तदा जीवाः मुक्ताः भवन्ति। तदेव जीवानां प्रकृत्या स्वरूपम्।
अतः मायाविशिष्टमद्वैतवेदान्ततत्त्ववत् जैननये अपि ज्ञानावरणं स्वीकृतम्। अपि च आवरणध्वंसे ज्ञानोदयः भवति इति तेषां सिद्धान्तः। सर्वदर्शनसंग्रहे जैननये जीवानां अवस्थापञ्चकं विवर्णितम्। माधवाचार्येण अत्र सर्वदर्शनसंग्रहे उच्चारितं –

"यदवोचद्वाचकाचार्यः औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य
स्वतत्वमौदयिकपारिणमिकौ चेति ।"

(चक्रवर्ती, सत्यज्योतिः। पृः२१ ।)

अतः जैनमते जीवानां पञ्चदशाः भवन्ति – औपशमिकः क्षायिकः मिश्रः औदयिकः पारिणामिकश्च । एतासु चतुर्विधासु अवस्थासु औदयिकावस्थायां यदा कर्मणः विपाकः उदयः वा भवति, तदा तस्मात् विपाकात् आत्ममालिन्यं किमपि आविर्भूतं भवति । जीवानां आत्मनः मालिन्यमयी इयं दशा औदयिकीदशा इत्यभिधायते । उदयात् उत्पद्यते इति औदयिकः। उदयः नाम मालिन्यम् । कर्मणः मालिन्यात् आत्मनः यादृशी अवस्था भवति सा एव आत्मनः औदयिकी अवस्था । कर्मणः उदयेन क्रोधः मानः माया लोभश्च जायते । मिथ्यामोहनीयस्य कर्मणः उदयेन मिथ्यादर्शनं भवति ।
सर्वदर्शनसंग्रहे माधवाचार्येण सप्ततत्त्वप्रसङ्गेनोक्तं –

"तदाह जीवाजीवास्रवबन्धसंवरनिर्जरमोक्षास्तत्त्वानीति ।"

(चक्रवर्ती, सत्यज्योतिः। पृः२२ ।)

अतः सप्ततत्त्वेषु बन्धः अन्यतमत्वं विधत्वे । बन्धविषये सर्वदर्शनसंग्रहे उक्तं–

"मिथ्यादर्शनाविरतिप्रमादकषायवशाद्योगवशाच्चात्मा
सूक्ष्मैकक्षेत्रावगाहिनामनन्तप्रदेशानां पुद्गलानां कर्मबन्धयोग्यानामादानमुपश्लेषणं
यत् करोति स बन्धः ।"

(चक्रवर्ती, सत्यज्योतिः। पृः२२ ।)

अनन्तावयवविशिष्टाः पुद्गलाः सूक्ष्मरूपेण जीवशरीरं प्रविश्य अणु-द्व्यणुकादिक्रमेण कर्मरूपेण विपरिणमते। मिथ्यादर्शनादिना जीवात्मा पुद्गलादीन् गृहीत्वा सम्बध्यते । एषः सम्बन्धः एव बन्धः । साधारणतया पुद्गलाः कर्मरूपेण विपरिणमन्ते । कषायविशिष्टं भूत्वा जीवाः तान् पुद्गलान् आश्रयन्ते । तथा चोदाहृतं माधवाचार्येण सर्वदर्शनसंग्रहे –

"तदुक्तं सकषायो जीवः कर्मभावयोग्यान् पुद्गलानादत्ते स बन्ध इति।"

(चक्रवर्ती, सत्यज्योतिः। पृः२३ ।)

कषायग्रहणमेव बन्धस्य हेतुमूलम् । कर्मणः एव कषायाः उत्पद्यन्ते, पुनः कषायकारणादेव कर्मणः ग्रहणं भवति । अत्र सम्बन्धः अयं अनादिः। अद्वैतवेदान्तदर्शनानुसारं यथा अविद्यया मायया वा सह जीवानां सम्बन्धः नैसर्गिकः अनादिः वा तथैवात्र ।
बन्धस्य प्रथमः हेतुः मिथ्यादर्शनम् । मिथ्याकर्मणः उदयेन जीवाः तत्त्वोपदेशमुपेक्ष्य जीवाजीवादीन् प्रति स्वभावजातः श्रद्धाभावः एव मिथ्यादर्शनम् । अतः मिथ्यादर्शनेन जीवाः यथार्थतत्त्वस्वरूपमं ज्ञातुं न शक्नुवन्ति। अद्वैतवेदान्तोपदिष्टया मायया अविद्यया वा एवंविधं भवति । मायाप्रभावात् एव जीवाः ब्रह्मस्वरूपं नानुभवन्ति । अतः मिथ्यादर्शनेन सह मायायाः सादृश्यं वर्तते।
कषायः भवति चतुर्थः बन्धहेतुः । कषाय नाम क्रोधः मान माया लोभश्च । एतेषु एकैकेन समवायेन वा जीवाः कर्मपुद्गलान् गृह्णन्ति । जीवः प्रकृत्या अमूर्तः अपि अनादिकालात् कर्मसम्बन्धात् मूर्तः भवति , तस्माद् कारणाद् मूर्तान् पुद्गलान् आश्रयते । यथा प्रदीपाग्निः तुलाखण्डेन तैलं संगृह्य तं तैलं सन्ताप्य दाह्यरूपेण विपरिणमते , तथैव जीवाः काषायिकविकारात् पुद्गलान् परिगृह्य तान् कर्मरूपेण परिवर्तन्ते । आत्मना सह पुद्गलानां सम्बन्धः एव बन्धः ।
अतः अद्वैतवेदान्तोपदिष्टा माया अविद्या वा यथा ब्रह्मतत्त्वं आच्छादयति तथैव चतस्रः कषायः प्रकृत्या जीवस्वरूरम् आवृणोति । अत्रापि सादृश्यमस्ति । जैनाचार्यः वाचकउमास्वातिः तस्य तत्त्वार्थधिगमसूत्रमिति ग्रन्थस्य षष्ठाध्यायस्य षट्संख्यके सूत्रे उक्तवान् –

"अव्रतकषायेन्द्रियक्रियाः पञ्चचतुःपञ्चपञ्चविंशतिसंख्याः पूर्वस्य भेदाः।"

(संघवी, सुखलालः। पृः १२६ ।)

अत्र साम्परायिककर्मविषयकः आश्रवभेदः वर्णितः । ते भेदाः भवन्ति अव्रतः कषायः इन्द्रियः क्रिया च । ते पुनः विभाजिताः भवन्ति । अव्रतास्तु पञ्चविधाः, चतुर्विधाः कषायाः, इन्द्रियानि पञ्चसंख्यकानि, क्रियाभेदाः पञ्चविंशतिसंख्यकाश्च भवन्ति। एतासु पञ्चविंशतिक्रियासु मायाक्रियायाः उल्लेखः विद्यते । को नाम मायाक्रिया इति जिज्ञासायां उच्यते ज्ञानदर्शनादिना योग्यतानुसारेण किमपि प्रतारणाकार्यं भवति चेत्, तर्हि सा मायाक्रिया इत्यभिधीयते ।
अद्वैतवेदान्तदर्शने यादृशं मायातत्त्वं अविद्यातत्त्वं वा विवृतं तत्रापि प्रतारणाप्रसङ्गः विद्यते। मायायाः शक्तिद्वयं विद्यते - आवरणं विक्षेपश्च । अत्रावरणं नाम वस्तुस्वरूपस्य आच्छादनम् , विक्षेपः नाम एकस्मिन् वस्तुनि अन्यस्य स्थापनम् । अत्र विक्षेपशक्त्या मायायाः प्रतारणाकार्यं चलति । परं इदं प्रतारणाकार्यं तात्त्विकं ज्ञानगतं वा, न तु जैननयवत् कर्मगतं । अत्रैव वैसादृश्यमस्ति । जैनदर्शने एकः जीवः अपरं जीवं प्रतार्यते । तत्र न तु ज्ञानगतं प्रतारणाकार्यम् । वैदिकसंहितायामपि माया इति शब्देन प्रतारणाप्रसङ्गः अस्ति।
जैनाचार्यः वाचकउमास्वातिः तस्य तत्त्वार्थधिगमसूत्रमिति ग्रन्थस्य षष्ठाध्यायस्य त्रयविंशतितमे सूत्रे उक्तवान् –

"माया तैर्यग्योनस्य।" (संघवी, सुखलालः। पृः १२७।)

जैनदर्शने बन्धहेतुरूपेण कर्मतत्त्वं स्वीकृतम्। तत्र जैनदार्शनिकाः अष्टविधं कर्मतत्त्वमुपदिष्टम्। तेषु अष्टविधेषु कर्मसु आयुःकर्म अन्यतमत्वं विधत्ते। नरकायुः तिर्यगायुः मनुष्यायुः देवायुश्च। अत्र तिर्यगायुःप्रसङ्गेन मायेति शब्दस्य उल्लेखः भवति। माया नाम अत्र कपटाचारः शठाचारः कुटिलाचारश्च। अनेन आचरणेन जीवाः तिर्यग्योनिजाताः भवन्ति। अत्रापि माया इत्यनेन प्रतारणा एव विवक्षिता।
अत्र एवंविधा जिज्ञासा मनसि उदेति यत् वेदान्तदर्शने यादृशं मायातत्त्वं समुपदिष्टं जैनदर्शने तादृशं तत्त्वं विवृतं न वा। अर्थात् माया इत्यनेन शब्देन कीदृशं वस्तुतत्त्वं जैनदार्शनिकैः स्वीकृतम्। जैनदार्शनिकाः अद्वैतवेदान्तोपदिष्टां मायां अविद्या मिथ्याज्ञानं मिथ्याप्रतिभासः इत्यादिना शब्देनापि व्यवहरन्ति। अतः अद्वैतवेदान्तिनः यां मायां अद्वैतवेदान्तदर्शने सयुक्तिकं समुपदिशन्ति, तादृशं तत्त्वं जैनदर्शने अज्ञानं मिथ्याज्ञानमिति शब्देन आख्यायते। अद्वैतवेदान्तदर्शने मायापर्यायभूताः बहवः शब्दाः सन्ति, यथा – अविद्या अज्ञानं अध्यासः उपाधिः च इति। एतेषु अद्वैतवेदान्तदर्शने अविद्यायाः यथा अवस्तुत्वेन अङ्गीकारः दृश्यते, जैनदर्शने तस्य तादृशं अवस्तुतत्त्वं न स्वीक्रियते। वेदान्तसारे सदानन्दयोगीन्द्रेण प्रोक्तमज्ञानस्वरूपं – "अज्ञानं तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपां यत्किञ्चिदिति वदन्ति, "अहम् अज्ञः" इत्याद्यनुभवात्, "देवात्मशक्तिं स्वगुणैः निगूढाम्" (श्वेःउः१/३) इत्यादिश्रुतेश्च।" (पालः,विपदभञ्जनः। पृः ७९।)
अतः यत् न सत्स्वरूपं नासत्स्वरूपं, अपि च सदसद्भ्यां विलक्षणं तदवश्यमेव अनिर्वचनीयमिति। अतः गोकर्णन्यानेन इदमज्ञानमिति निरूपणं नैव सम्भवति। अज्ञानं सत्स्वरूमिति वक्तुं न शक्यते कारणं जीवस्य मुक्तदशायामज्ञानं न राजते। अज्ञानमसत्स्वरुपमित्यपि न कथितुं शक्यते कारणं जीवानां संसारप्रतीतिः वर्तते। यावदज्ञानं तावत् संसारः इति स्थितिः अद्वैतवेदान्तदिशा। पुनः अज्ञानं सत्स्वरूपमसत्स्वरूपं च इति निश्चये अपि परस्परविरुद्धधर्मयोः भावः न सम्भवतीति सिद्वान्तः। अतः अज्ञानं सदसद्विलक्षणमनिर्वचनीयमिति। तथा चोक्तं शङ्कराचार्येण विवेकचूडामणौ –

"सन्नाप्यसननाप्युभयात्मिका नो भिन्नाप्यभिन्नाप्युभयात्मिका नो।
साङ्गाप्यनङ्गा ह्युभयात्मिका नो महाद्भुता'निर्वचनीयरूपा॥"
(वेदान्तानन्दः। पृः६७।)

ब्रह्मसिद्धौ मण्डनमिश्रेणोक्तं
"अत्रोच्यते – नाविद्या ब्रह्मणः स्वभाव, नात्यन्तमसती नापि सती, एवमेवेयमविद्या माया मिथ्यावभास इत्युच्यते। स्वभावश्चेत् कस्यचित्, अन्यो'नन्यो वा परमार्थ एवेति नाविद्या, अत्यन्तासत्त्वे खपुष्पसदृशी न व्यवहाराङ्गं, तस्मादनिर्वचनीया।" (शास्त्री, एस् कुप्पुस्वामी। पृः ९।)
तस्मादनिर्वाच्यत्वात् अज्ञानलक्षणे यत्किञ्चिदिति विशेषणं संयोजितम्। कारणमत्र यथा घटद्रव्यं कम्बुग्रीवादिमान् मृदपिण्डविशेषः इत्यनेन ज्ञातुं शक्यते तथैव न अज्ञानम्। इदमित्थमित्यनेन अज्ञानस्य सिद्धिः न भवति। अद्वैतवेदान्तिनः मन्वन्ते यत् अज्ञानं न तु साक्षिसिद्धं, न वा प्रमाणसिद्धमिति। अज्ञानमवस्तुः, तस्मात् केनापि प्रमाणेन तस्य सिद्धिः न भवति। ब्रह्मसिद्धिकारेणोक्तं –
"अत्र केचिदाहुः – वस्तुसिद्वावेव दोषः, नासिद्धं वस्तु वस्त्वन्तरनिष्पत्तये'लं, न मायामात्रे, न हि मायायां काचित् अनुपपत्तिः, अनुपपद्यमानार्थेव हि माया, उपपद्यमानार्थत्वे यथार्थभावान्न माया स्यात्।" (शास्त्री, एस् कुप्पुस्वामी। पृः१०।)
अस्य अज्ञानस्य अस्तित्वे किमपि प्रमाणमस्ति चेत्, तर्हि अविद्या वस्तुरूपेण प्रतिभाति प्रमाणसिद्धत्वात्। अविद्या अज्ञानं वा केनापि प्रमाणेन असिद्धत्वेन एव अविद्या अज्ञानं वा। अन्यथा तद् ज्ञानं इत्यनेन अभिधीयते। अनेन मायायाः दुरधिगम्यता प्रतिपादिता अद्वैतवैदान्तिकैः। तथा चोक्तं इष्टसिद्धिकारेण विमुक्तात्मनाचार्येण –

"दुर्घटत्वमविद्याया भूषणं न तु दूषणम्।
कथञ्चित् घटमानत्वे अविद्यात्वं दुर्घटं भवेत्॥"
(हिरियान्ना, एम्। पृः २१०।)

जैनाः कस्यापि सम्पूर्णतया अवस्तुत्वं न स्वीकुर्वन्ति।

उमास्वातिना उक्तं द्रव्यस्वरूपं-

"गुणपर्यायवद् द्रव्यम्।" (संघवी, सुखलालः। पृः१२५।)

गुणस्तावत् द्रव्यस्य नित्यधर्मः अनित्यस्तु पर्यायश्च। नित्यधर्मः खलु न परिवर्तते, परं अनित्यधर्मः परिवर्तते। जगदिदं द्रव्यमयम्। अतः नित्यधर्मदृष्ट्या इदं जगत् ध्रुवरूपं, अनित्यधर्मदिशा तद्विपरीतं च। जगतः नित्यत्वं स्वीकृतं चेत् एकदेशदृष्टिदोषः जायते, अनित्यत्वं स्वीकृतं चेत् सः दोषः पुनर्जायते। अतः अत्र परिवर्तनमपरिवर्तनं उभयमेव सत्यम्। जैनाः स्वीकुर्वन्ति यत् एकस्मिन् द्रव्ये बहवः धर्माः विद्यन्ते। यथा आत्मनः अनित्यधर्माः तावत् कामना वासना सुखं दुःखमित्यादयः। एतैः सर्वेः धर्मैः द्रव्यस्वरूपं परिवर्तते। अतः कस्यचित् द्रव्यस्य पूर्णज्ञानलाभः न सम्भवति। कारणं तस्मिन् द्रव्ये अनन्तधर्माः वर्तन्ते, तद् ज्ञानं न तु साधारणाय जनाय, अपि च सर्वज्ञाय भवति। जैनमते सीमितद्रव्यं असीमितधर्मविशिष्टम्। अतः वयं सर्वे द्रव्यानां आंशिकज्ञानं लभामहे।
एते अनन्तधर्माः पुनः भावात्मकाः अभावात्मकाश्च। ये तावत् धर्माः वस्तुषु विद्यन्ते ते तु भावात्मकाः, तद्विपरीताः अभावात्मकाः भवन्ति। अभावात्मकधर्मैः द्रव्यमेकं अन्यस्मात् द्रव्यात् भिन्नं भवति। तस्मात् द्रव्येषु भावात्मकात् अभावात्मकधर्माः अधिकाः भवन्ति। दृष्टान्तमुखेन अयं विषयः विशदीक्रियते – यथा घटः स्वरूपतः सन्नपि रूपान्तरेण पटत्वादिना मठत्वादिना च तत्रैवास्ति तस्यास्तित्वाभावः अपि स्वीकृतः। अर्थात् घटत्वावच्छिन्ना आधेयतानिरूपिता अधिकरणतावती घटवति देशे घटत्वेन घटस्य अस्तित्वसत्त्वे अपि तत्रैव पटत्वेन रूपान्तरेण तस्य अभावः अपि अस्ति एव इति। अतः एवं वक्तुं शक्यते यत् जैनदर्शनानुसारं यत् एकदेशावच्छेदेन एककालावच्छेदेन च भावाभावयोः एकत्र समावेशेन नास्ति दोषः। तथा चोक्तं आचार्य सामन्तभद्रेण आप्तमीमांसायां –

"अवस्त्वनभिलाप्यं स्यात् सर्वान्तैः परिवर्जितम्।
वस्त्वेवावस्तुतां याति प्रक्रियाया विपर्ययात्॥"
(घोषालः,शरत्चन्द्रः।पृः १०८।)

अतः एवमेव एकः वस्तु वस्त्वन्तरम् अपेक्षया अवश्यमेव अवस्तुभूतः भवति। अर्थात् घटत्वावच्छिन्नतया भासमानः घटः भवति सर्वथा वस्तुभूतः। पटत्वावच्छिन्नतया भासमानश्च स एव घटः नितान्तमवस्तुभूतः भवति।
अत्र मनसि प्रश्नः उदेति यत् कथं घट-घटाभावयोः वस्तुत्वावस्तुत्वयोः च परस्परविरूद्धत्वात् एकस्मिनेव अधिकरणे तयोः द्वयोः संस्थानं भवितव्यं। तदुत्तरेण जैनाचार्याः वदन्ति यत् अभाववाचकः शब्दः अपि भावभूतमर्थं ज्ञापयति। यथा अब्राह्मणमाह्वय – अत्र अब्राह्मणशब्दः ब्राह्मणभिन्नवाचकः अपि ब्राह्मणभिन्नान् वर्णान् बोधयति। अतः भावाभावयोः नास्ति कः अपि विरोधः इति सिद्धान्तः। अतः जैनदृष्ट्या कः अपि वस्तुः न सर्वथा भावभूतः, न च अभावभूतः इति।
अतः एवं सिद्धान्तितं यत् द्रव्यस्य स्वरूपेण भावः पररूपेणाभावश्च विद्यते। कथं इदं सिद्धमिति आशङ्कायां नैमित्तिकभेदात्। यथा घटस्य निमित्ताभूताः दण्डचक्रादयः तथैव पटस्य निमित्ताभूताः तन्तुवेमादयः च भवन्ति, ते निमित्ताभूताः पदार्थाः परस्परं भिन्नाः भवन्ति। निमित्तभेदादत्र नैमित्तिकाः भिन्नाः भवन्ति। अतः एकस्मिन् वस्तुनि भावाभावयोः अभेदः भवति।
अत्र अयमेव सिद्धान्तः यत् अद्वैतवेदान्तदर्शने यथा मायातत्त्वम् अज्ञानतत्त्वं वा विवर्णितं तथैव जैनदर्शने नोपदिष्टम्। अनेकान्तवादिनः जैनाः न भावात्मकं तत्त्वं स्वीकुर्वन्ति, न चाभावात्मकम्। यथा संख्यावतः संख्या न भिद्यते, तथैव भावाभावौ अपि वस्तुनः न भिद्येते।
जैनदार्शनिकाः अद्वैतवेदान्तोपदिष्टां मायां अविद्या अज्ञानं मिथ्याज्ञानं मिथ्याप्रतिभासः इत्यादिना शब्देनापि व्यवहरन्ति। न विद्या इति अविद्या, न ज्ञानमिति अज्ञानमिति उभयत्रैव एताभ्यां विग्रहाभ्यां नञ् तत्पुरुषः समासः भवति। नञ्तत्पुरुषसमासे नञ् इत्यस्यार्थः द्विविधः भवति – पर्य्युदासः प्रसज्यप्रतिषेधश्च। कुमारिलभट्टेन मीमांसावार्त्तिके एतयोः द्वयोः लक्षणमुक्तं –

"प्रधानत्वं विधेर्यत्र प्रतिषेधे अप्रधानता।
पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्॥
अप्राधान्यं विधेर्यत्र प्रतिषेधो प्रधानता।
प्रसज्यप्रतिषेधः असौ क्रियया सह यत्र नञ्॥"

(हालदारः, गुरुपदः। पृः ४३२।)

अस्य सरलार्थः भवति यत्र नञ्तत्पुरुषसमासे विधेः प्राधान्यं, प्रतिषेधस्याप्राध्यन्यं सूचितं तत्र पर्य्युदासः भवति । एवं अविद्यापदे अज्ञानपदे वा पर्य्युदासरूपः नञः विद्यते चेत्, तर्हि अस्यार्थः भवति अविद्याघटकीभूतः अज्ञानघटकीभूतः वा मिथ्याज्ञानमेव । अत्र यदि प्रसज्यप्रतिषेधरूपः नञः अस्ति तर्हि अविद्यापदेन विद्याभावः, अज्ञानपदेन ज्ञानाभावः च इति बोद्धव्यः । अत्र कीदृशः नञर्थः ग्रहणीयः अयमेव प्रश्नः।

अत्र अविद्यापदे अज्ञानपदे वा प्रसज्यप्रतिषेधरूपेण नञः इत्यनेन स्वीकृतेन सर्वज्ञत्वमसिद्धं भवति। महापुरुषेषु तपस्विषु वा ज्ञानाभावरूपम् अज्ञानम् बन्धहेतुत्वेन सदैव पूर्णज्ञानं वाधते। अशेषज्ञानस्यभावात् केनापि कदापि पूर्णज्ञानसम्पत्तिः नोदेति। अनेन जैनाचार्यस्वीकृतेन मोक्षप्रसङ्गभङ्गः भवति। तथा चोक्तं वाचकाचार्येण तत्त्वार्थसूत्रे –

"बन्धहेत्वभावनिर्जराभ्यां। कृत्स्नकर्मक्षयो मोक्षः।"

(संघवी, सुखलालः। पृः १३८।)

अतः अयं पक्षः दोषार्हः।अस्माभिः तर्कमेवाश्रितं यत् – तत्वाभ्यासेन क्रमेण यत् स्तोकं ज्ञानमुत्पद्यते, तस्मिन् ज्ञाने वह्वज्ञानविनाशशक्तिः विराजते। अयमं पक्षः अपि न निर्दोषः। कारणं बन्धः सदैव अज्ञाननिमित्तकः, न तु ज्ञाननिमित्तकः इति सर्वजनविदितः। स्तोकज्ञानमिश्रिताज्ञानतो कदापि बन्धस्योत्पत्तिः न सम्भवति। अत्र बन्धस्याभावः प्रसङ्गः स्यात्।

अतः ज्ञानाभावरूपः अज्ञानपक्षः यथा न श्रेयस्करः तथैव अल्पज्ञानपक्षः अपि न समीचीनम् । तस्मात् जैनदर्शने माया न केवलं अज्ञानरूपा अविद्यारूपा च, अपि च एकस्मिन् आत्मपदार्थे कामक्रोधादिकषायरूपं मोहविशिष्टं मिथ्याज्ञानमेव अज्ञानम्। तदज्ञानमेव जीवानां बन्धकारणम्। जैनाचार्येण ऊमास्वातिना तत्त्वार्थाधिगमे सूत्रे उक्तं-

"सकषायत्वाज्जीवः कर्मणः योग्यान् पुद्गलानादत्ते। स बन्धः।"

(संघवी, सुखलालः। पृः १३१।)

अत्र एवं प्रश्न जायते यत् आत्मा निरवयवः चैतन्यमयश्च भवति। कर्म भवति जडद्रव्यं मूर्तद्रव्यं च। अपि च यः निरवयवः सः कथं कर्माणि ग्रहीतुं शक्नोति। अतः हस्तपदादिशून्यत्वात् आत्मनः वस्तुग्रहणसामर्थ्यमपि न सम्भवति। इत्थं मूर्तद्रव्येन सह विमूर्तद्रव्यस्य मेलनं न सम्भवति। तस्मात् कारणादेव हस्तपदादिविशिष्टस्य शरीरावच्छिन्नस्य जीवस्य प्रसङ्गः आयातः। अतः आत्मा नाम शरीरावच्छिन्नः जीवः। यः जीवः सावयवेन हस्तपदादिना ग्रहणवर्जनरूपं कार्यं कर्तुं शक्नोति।

अत्र पुनः आशङ्क्यते जीवकर्मणोः अस्य सम्बन्धस्य अनादित्वेन कापि समस्या अस्ति न वा। यदि अत्र जीवगतस्य बन्धस्य सादित्वं स्वीकृतं तर्हि मुक्तजीववत् शुद्धजीवेषु बन्धाभावः वर्तते। परं शुद्धजीवेषु अपि जैनमते बन्धः विद्यते। जैननये पुद्गलकर्मणोः तादात्म्यसम्बन्धः विद्यते। पुद्गलरूपानि कर्माणि स्वतः एव जीवं प्रति धावन्ति।

जैनदर्शने विमूर्तात्मना सह मूर्तकर्मणः सम्बन्धः अनादि इत्युच्यते। कस्मिन काले आत्मा आसीत् कर्मशून्यः शुद्धस्वरूपः, अनन्तरं क्रमेण स आत्मा कर्मणा लिप्यते, संसारं जीवरूपेण प्रविशति इत्येवं न तु जैननयसम्मतम्। अनादिकालादेव आत्मा कर्मणा सह सम्बध्यते संसारचक्रे परिभ्रमति च। कदापि अयमात्मा सर्वं कर्ममलं दूरीकृत्य शुद्धस्वरूपं भविष्यति। कर्मपुद्गलेन आत्मनि यदावरणं जायते स एव जैननये कार्मणशरीरः। अयं कार्मणशरीरः आत्मना सह संयुज्य असकृत् देहात् देहान्तरं प्रविशति। नवशरीरं प्रविश्य कर्मणः प्रभावात् भिन्नासु क्रियासु आत्मासंयुक्तः शरीरः प्रवर्तते। तस्मादेव नवः नवः कर्मपुद्गलः जायते। अस्य कर्मपुद्गलस्य जीवस्य कार्मणशरीरे सञ्चयः भवति। पूर्वजन्मनः सञ्चितकर्म फलप्रदानेन क्रमेण विनश्यति, अनन्तरं स कर्मसमुदायः कार्मणशरीरात् निर्गच्छति।

अतः अनादिकालात् आत्मना सह कर्मणः सम्बन्धात् जीवशरीरः उत्पद्यते। जन्ममरणशीलः संसारी जीवः रागद्वेषविकारात् पुनः पुनः कर्मपुद्गलेन सम्बध्यते। बद्धकर्मफलाद् पुनः जायते, जातकारणात् शरीरः भवति, शरीरात् इन्द्रियः। इन्द्रियेन विषयग्रहणं, विषयग्रहणेन रागद्वेषरूपमध्यावसायः समुपजायते, तस्मात् पुनः कर्मबन्धनं भवति।

जैननये द्विविधं कर्मतत्त्वं स्वीकृतम्- भावकर्म द्रव्यकर्म च। भावकर्म नाम रागद्वेषरूपपरिणामभूतानि कर्माणि, द्रव्यकर्म तावत् पौदगलिककर्माणि। जैनाः मन्यन्ते रागद्वेषादिरूपाः भावाः भावकर्माणि च जीवानां संसारकारणमेव भवति। अनेन कर्मवलेनैव जीव सांसारिकं विषयं प्रति आकर्षणं अनुभवति। अनया विषयवासनया जीवाः जन्ममरणशीले संसारमार्गे प्रत्यहं गमनागमनं विदधाति। जैनाः पञ्चविधं मिथ्यात्वादिकं कर्मबन्धकारणं स्वीकुर्वन्ति। पञ्चविधेषु कर्मबन्धकारणेषु चतुर्थः भवति कषायः। कषाय नाम सर्वान् जीवान् प्रति समभावाभावात् रागद्वेषकारणात् वा क्रोधमानमायालोभादिकानाम् उत्पत्तिः। क्रोधः मानं माया लोभः च एते सर्वे कषायाः इति कथ्यन्ते। कषायः चतुर्विधः भवति – अनन्तानुबन्धि अप्रत्याख्यानवरणं प्रत्याख्यानवरणं सञ्जलनम्। अनन्तानुबन्धीकषायजातेन संस्कारेण यत् कर्मबन्धनं भवति तेनैव कर्मबन्धनेन जीवानां नरकगतिर्भवति, सम्यक्दर्शनं विनश्यति च। जैनगृहस्थानां श्रावकानां वा पालनीयः धर्मः भवति देशविरतिः। देशविरतिः नाम पञ्चमहाव्रतः। येन कषायेन गृहस्थानां देशविरतिः इति धर्मः प्रवाध्यते, तद् अप्रत्याख्यावरणमिति कथ्यते। अनेन कषायेन जीवाः पशुनां विहगानां च योनिसु जायन्ते। येन कषायेन जीवाः मनुष्यरूपेण जायन्ते सः कषायः प्रत्याख्यानावरणमिति उच्यते। अनेन कषायेन जीवानां सर्वविधानां साधुकर्मणां बाधः भवति। सञ्जलनमित्यभिधेयात् कषायप्रभावात् आधिदैविकेन आधिभौतिकेन च दुःखेन कस्यापि संयतस्य जीवस्य चित्तं अभिभूतः भवति। अनेन उन्नतचारित्र्यधर्मः बाधते। क्रोधमानमायालोभादीनां सर्वेषां चतुर्विधानां कषायानां प्रत्येकानां चतुर्विधः अवान्तरभेदः विद्यते। अतः जैनमतेन कषायः षोडशविधः भवति।

कषायेन आत्मना सह कर्मणां परमाणवः सम्बध्यते। अयं सम्बन्धः जैननये बन्धः इत्युच्यते। अयं बन्धः चतुर्विधः भवति प्रकृतिबन्धः स्थितिबन्धः रसबन्धः प्रदेशबन्धश्च। प्रकृतिः नाम स्वभावः, येन बन्धेन आत्मनः स्वभावः प्रकृतिर्वा आच्छाद्यते स प्रकृतिबन्धः। अष्टविधेषु प्रकृतिबन्धेषु मोहनीयः अन्यतमत्वं विधत्ते। यः बन्धः आत्मनि भ्रममुद्भाव्य परवस्तुनि अहंकारं मोहं वा समुत्पादयति स मोहनीयः भवति। अनेन मोहनीयेन सत्मार्गं प्रवाध्यते। अपि च कस्मिन्शिद् जीवे सत्यधारणायाः भावः विद्यते चेत् तां धारणां विनश्यति। कः अपि यदि सत्यधारणामनुसृत्य आचरति, तत्रापि अयं बन्धः संशयमुत्पादयति। एतानि मोहनीयकर्माणि चतुर्विधानि - दर्शनमोहः चारित्रमोहः अकषायवेदनीयः कषायवेदनीयश्च। येनोपदेशेन कुटिलकर्मबन्धनं जायते सः मोहः दर्शनमोह इत्युच्यते। अत्र पुण्यपापात्माबन्धमुक्त्यादिनाम् अस्तित्वं नास्ति इति प्रलापवाक्यमुपदिश्यते, यत्र देवस्थानस्य धनमपहरणं न तु निन्दायोग्यं, यत्र तीर्थाङ्कराणां जिनानां निन्दा क्रियते तत्रैव दर्शनमोहः भवति। अनेन मोहबुद्धिना सत् इति असद्रूपेण, असदिति सद्रूपेण प्रतीयते। सत्यं अनृतरूपेण, अनृतं सत्यरूपेण मन्यते। अतः अनेन सदैव विपरीतबुद्धिः विजायते। दर्शनमोहाभिभूतः जीवः आत्मनः यथार्थस्वरूपं विस्मृत्य आत्मानं स्वीयं वा दुनोति। चतुर्विधेषु मोहनीयकर्मसु अन्यतमः चारित्र्यमोहः जीवानाम् आचरणाश्रितः भवति। अनन्तानुबन्धिभिः इत्यादिभिः चतुर्विधैः कषायैवेदनीयैः सह हास्यादीनां नवविधानां अकषायवेदनीयायां संयोगेन चारित्र्यमोहः उत्पद्यते। अनेन कर्मणा आत्मनः स्वरूपं आवृतं भवति। तस्मादेव कारणात् सच्चारित्र्यं नोपलभ्यते।

एतादृशात् मोहकारणात् जीवाः आसुरीवृत्तिमाश्रित्य आत्मस्वरूपं विस्मृत्य केवलं जागतिकं विषयं प्रति अनुधाव्य जीवन्ति। महामोहात् विषयाशां सञ्जायते, विषयाशाकारणात् जीवः जटिलजालबद्धः भवति। तस्मात् बन्धनात् स्वस्य पार्थिवेच्छापूर्तये आचरति, योनितः योनिषु भ्रमति, भवाब्धिं तर्तुं कामयमानः अपि न शक्नोति। अतः दर्शनमोहः चारित्रमोहः च उभावेव जीवानां प्रकृतस्वरूपमाच्छाद्य तान् भ्रान्तमार्गं दर्शयतः।

**उपसंहार**

अद्वैतवेदान्ते अपि जैनदर्शनानुसारं मिथ्याज्ञानतत्त्वं अज्ञानतत्त्वं वा स्वीकृतम्। श्रीमच्छङ्कराचार्यपादेन तस्य विवेकचूडामणौ बन्धप्रकरणे अज्ञानस्य यद् स्वरूपं व्याख्यातं तेन सह जैनानाम अज्ञानतत्त्वस्य मिथ्याज्ञानतत्त्वस्या वा सादृश्यं दृश्यते। तेनोक्तं –

"बीजं संसृतिभूमिजस्य तु तमो देहात्मधीरङ्कुरो
रागः पल्लवमम्बु कर्म तु वपुः स्कन्धः असवः शाखिका।
अग्राणीन्द्रियसंहतिश्च विषयाः पुष्पाणि दुःखं फलम्
नानाकर्मसमुद्भवं बहुविधं भोक्ता अत्र जीवः खगः ॥"

(वेदान्तानन्दः। पृः९८।)

अत्र संसारः वृक्षेण सह उपमीयते। अस्य संसारवृक्षस्य उपादानकारणमज्ञानमेव। देहात्मबुद्धिः अस्य वृक्षस्य अङ्कुरः आसक्तिः पल्लवः कर्मणा अस्य जलसेचनं भवति। देहः अस्य स्कन्धः, शाखाः प्राणाः, इन्द्रियाः शाखाग्राभागाः पुष्पानि विषयस्वरूपानि कर्मजातानि दुःखानि संसारवृक्षस्य फलस्वरूपानि भवन्ति।

अस्मात् मोहवशात् जीवानां यथार्थज्ञानं भवति खलु अज्ञानम्। एतादृशस्य अज्ञानस्य समापने सम्यग्दर्शनस्य आविर्भावः भवति। सम्यग्दर्शनं विना ज्ञानं सम्यग् न भवति। सम्यग्ज्ञानदृते कदापि सम्यगाचरणं नोपजायते। अतः एतत् सिद्धान्तितं यत् जैनदर्शने यद् मिथ्याज्ञानं तद् तु सम्यग्दर्शनस्य प्रतिबन्धकः भवति। सम्यगदर्शनविरोघितायाः मिथ्याज्ञानमिदं जैनदर्शनसम्मतं वेदान्ताभिमतं मायातुल्यमिति। अतः वेदान्तस्वीकृता माया जैनदर्शनसम्मतं मिथ्याज्ञानपर्यायभूतं भवति। जैनमतेन मिथ्याज्ञानस्य प्रभावाद् जीवः सांसारिकं क्षणिकं सुखाभासं सुखमिव मन्यते। अस्य सांसारिकस्य सुखस्य किमपि याथार्थ्यं नास्ति। अनेन मिथ्याज्ञानेन जीवः शरीरात्मनोः मिथ्यैक्यं अनुभूय तदनुसारमाचरति। जैनसम्मतेषु षड्विधेषु द्रव्येषु केवलं जीवः चैतन्यमयः द्रव्यविशेषः भवति, अपराणि सर्वाणि पञ्चद्रव्याणि जडभूतानि भवन्ति च। तथापि जीवः मिथ्याज्ञानकारणाद् चैतन्यमये आत्मनि अचैतन्यमयानि जडभूतानि पुद्गलानि समारोप्य व्यवहरति। जीवपुद्गलयोः पारस्परिकः सम्बन्धः अयं बन्धः इत्युच्यते। अयं बन्धः संसारस्य नामान्तरमेव। वेदान्तदर्शने यथा मायाकारणात् संसारः तथैव जैनदर्शने मिथ्याज्ञानमेव संसारमूलम्। एतस्मात् कारणात् मायायाः परपर्यायभूतं मिथ्याज्ञानम्।

**आश्रितग्रन्थावलिः**


1. संघवी,सुखलालः। सं.। तत्त्वार्थसूत्रम्। पार्श्वनाथविद्यापीठः। वाराणसी। २०१९ (अष्टम-संस्करणम्)।
2. चक्रवर्ती, सत्यज्योतिः। सं.। सायणमाधवीय सर्व्वदर्शनसंग्रहः (प्रथमः द्वितीयखण्डश्च)। साहित्यश्री। कोलकाता। १४१३ वङ्गाब्दः।
3. पालः,विपदभञ्जनः। सं। वेदान्तसारः। संस्कृत-पुस्तक-भाण्डारः। कलकाता। २०१७ (षष्ठ-संस्करणम्)।
4. वेदान्तानन्दः। अनु., सं। विवेकचूड़ामणिः। उद्बोधन-कार्यालयः। कलकाता। २००५ ( प्रथम-संस्करणम्, नवम पुनर्मुद्रणम्)।
5. शास्त्री, एस् कुप्पुस्वामी। सं। ब्रह्मसिद्धिः (शङ्खपाणिः टीकया सह)। श्रीः सद्गुरु पावलिकेशन्। दिल्ली। १९८४ ( द्वितीय-संस्करणम्)।
6. हिरियान्ना,एम्.। सं। इष्टसिद्धिः। वरोदा। ओरियेन्टाल इनस्टिटिउट्। १९३३।
7. हालदारः, गुरुपदः। व्याकरणदर्शनेर-इतिहास। संस्कृतवुकडिपो। कलकाता। २००६ (द्वितीय-संस्करणम्, पुनर्मुद्रणम्)।
8. घोषालः, शरत्चन्द्रः। सं। आप्तमीमांसा। भारतीय-ज्ञानपीठः। निउ-दिल्ली। २०१० (द्वितीय-संस्करणम्)।



International Journal of Sanskrit Research

अनन्ता

ISSN: 2394-7519
IJSR 2024; 10(1): 204-206

www.anantaajournal.com
Received: 08-11-2023
Accepted: 11-12-2023

**दीपाञ्जलि भञ्जः**
संस्कृत अध्यापिका,
पञ्चायत समिति महाविद्यालयः,
धर्मपुरा, शुलिआपदा, मयूरभञ्जः,
ओडिशा, भारत

**Corresponding Author:**
**दीपाञ्जलि भञ्जः**
संस्कृत अध्यापिका,
पञ्चायत समिति महाविद्यालयः,
धर्मपुरा, शुलिआपदा, मयूरभञ्जः,
ओडिशा, भारत

# संस्कृतिरक्षणाय मठानां योगदानम्

**दीपाञ्जलि भञ्जः**

**प्रस्तावना**

भारतीयसंस्कृतौ चत्वारः पुरुषार्थाः - धर्माः, अर्थाः, कामः मोक्षश्च। निखिलेस्मिन् संसारे मानवाणां स्व स्व धर्म स्थापनाय सुष्ठुमार्गेण पालनाय च धर्मशास्त्रस्य प्रयोजनीयता नितरां वर्त्तते। दुःखदैन्यपरिपूर्णेस्मिन् संसारे जननादनन्तरं मनुष्यः स्वस्योन्नतये सततं यत्नते। तस्याभ्युदयार्थं मानवः पुरुषार्थचतुष्टयोपरि निर्भरशीलो भवति। तेषु पुरुषार्थेषु निखिलपुरुषार्थचूडायमानो धर्मोभारतीयसंस्कृतेः परिपूरकः परिपोषकश्चेति विदुषां मतम्। तस्मात् भारतीयसंस्कृतेः संरक्षणाय धर्मस्य पालनं कर्तव्यम्। मठः शब्दस्य अर्थ भवति संस्थानम्। यत्र गुरु शिष्यं आध्यात्मिकशिक्षा, उपदेशादि प्रददाति। गुरु प्रायः धर्मगुरु इति अभिधियते। अर्थात् मठः,पुं, छात्रादिनिलयः। इत्यमरः। मठन्ति वसन्ति छात्रादयोश्च मठः। मठ वासमर्द्दयोः अल्,प्रत्यय इति सूत्रेण। छत्रशीला विद्यार्थिनछात्राः। तत्र सामाजिकसेवा, साहित्यादि सम्बन्धितकार्यः संपादित भवति। भिन्नभिन्न संप्रदायस्य विभिन्नानि मठाः सन्ति। संस्कृति संरक्षणाय मठानां गुरुत्वपूर्णभूमिकाः वर्तन्ते।

**मठपरंपरायाः सृष्टि**

यदा समाजे विकाराः प्रादुर्भवन्ति, अनाचारास्य वृद्धिं यान्ति, तदा सदाचार-संवर्द्धनाय धर्मस्य पुनः संस्थापनाय च कश्चित् महापुरुषो भुवम् अवतरति। श्री शङ्कराचार्य्यः एतादृश एव महापुरुष आसीत्। सन्यासमङ्गीकृत्य भ्रमणमारव्धवान्, सर्वप्रथममयं ब्रह्मकामो गौडपादशिष्यस्य गोविन्दनाथस्याश्रमं जगाम। गोविन्दनाथाश्रमे अयं भूयोऽपि वेदवेदाङ्गानि दर्शनानि धर्मप्रचारानि चाधीतवान्। दशवर्ष-देशीयस्य अस्य गुरुर्विधिवत् सन्यासाश्रमे दीक्षामकल्पयत्। गुरोरनुज्ञामुपलभ्य शङ्करः ब्रह्मज्ञानप्रतिष्ठायै भारतभ्रमणं प्रारभत। तदानीं वौद्धधर्मस्य पताका भारतेषु दोधूयते स्म। परं बौद्धभिक्षुवः भिक्षुण्यश्च बुद्धोपदिष्टं धर्मरहस्यं विस्मृत्य व्यभिचारपरायणा अभवन्। ब्राह्मणधर्मे तान्त्रिकाणां प्रभावोऽवर्द्धत्। इत्थं शंकरस्य समये विविधा धर्मसंप्रदाया अनाचारेण ग्रस्ता अभवत्। जनता च मोहान्धतमसि मग्ना असीत्। शंकराचार्य्यो बौद्धानां तान्त्रिकाणाञ्च प्रपञ्चं निराकृत्य उपनिषद्-ब्रह्मसूत्र-गीतासु प्रतिपादितासु धर्मसिद्धान्तान् समुद्घोषायामास। तेन बौद्धानां निरीश्वरवादस्य शून्यवादस्य च कुलिशकठोरैस्तर्के खण्डनं विहितम्। शंकरस्य पुरुषार्थेव पतनोन्मुखो बौद्धधर्म विनष्टः, जनता च जीवनोन्नायकैः वैदिकसिद्धान्तैः सुखमुच्छ्वसिता। इत्थम् आहिमालयात् आकन्याकुमार्य्याः अधर्मं ध्वंसयन् धर्मं च स्थापयन् अयं मनस्वी काञ्ची-द्वारिका-वदरी-पुरीषु चतुष्पीठान् संस्थापयामास। चर्तुधामः भारतस्य धार्मिकस्थलरूपेण परिचितम् यथा-पुरी, रामेश्वरम्, द्वारिका,वद्रीनाथः। प्रथम मठ अष्टमशताद्धे शंकराचार्य्यः स्थापयति। भारतस्य महानदार्शनिकः धर्मप्रवर्तकरूपेण परिचितम्। कलियुगे भगवत्पाद श्रीमद्शंकराचार्य्यभाष्य, प्रकरणतया मीमांसाशास्त्रार्थं, परकायप्रवेशाय, नारदकुण्डे अर्चाविग्रहः श्रीबदरीनाथः, भूगर्भे अर्चाविग्रहश्रीजगन्नाथ दारुब्रह्म प्रस्थापितं, सुधन्या सार्वभौमराजसिंहासनं समपितं चतुराम्नाय- चर्तुमठानां स्थापनाय अहर्निशं परिश्रममाद्धमेन आध्यात्मस्य उज्जीवितं प्रतिष्ठितं कृतम्। चतुः धार्मिकमठः यथा- दक्षिणे शृंगेरी शंकराचार्य्यमठ, पूर्वे(ओडिशा) जगन्नाथपुरीधामे गोवर्धनमठ, पश्चिमे द्वारिकाये शारदामठ, बद्रिकाश्रमे ज्योर्तिमठः भारतस्य एकात्मकता दिग्दर्शितं करोति। हिन्दुधर्मस्य प्रतिष्ठाय कलिप्रभवदृष्टनां जयेन परमपदं प्राप्तं कृतम्। यथा –

कलौ रुद्रो महादेवो लोकानामीश्वरः परः।
न देवता भवेन्नृणां देवतानांच दैवतम्।।
करिष्यत्यवताराणि शंकरो नीललोहितः।

शौतस्मार्त्तप्रतिष्ठार्थं भक्तानां हितकाम्यया।
उपदेक्ष्यति तजज्ञानं शिष्याणां ब्रह्मासंज्ञितम्।
सर्ववेदान्तसार हि धर्मान वेदनदिर्शितान।।
ये तं विप्रा निषेवन्ते येन केनोपचारतः।
विजित्य कलिजान दिषान यान्ति ते परमं पदम्।।[१]

**शृंगेरी मठः** शृंगेरी मठ भारतस्य दक्षिणे चिकमंगलुरस्थाने अवस्थितम्। मठस्य महावाक्य 'अहं ब्रह्मास्मि' वर्तते। मठमन्धे यजुर्वेदः आसीत्। प्रथममठाधीशः आचार्य सुरेश्वरः। तस्य पूर्वनामः मण्डनमिश्रः भवति। अधुना स्वामी भारती कृष्णतीर्थः, ३६ मठाधीशः वर्तते।

**गोवर्धन मठः** गोवर्धन मठः उत्कलक्षेत्रे वर्तते। अत्र दीक्षा प्राप्तं अनन्तरं सन्यासी आरण्य संप्रदायः मन्यते। मठस्य महावाक्यं 'प्रज्ञानं ब्रह्म' इति, तन्मन्धे रुगवेदः वर्तते। प्रथममठाधीश आदिशंकराचार्यः शिष्य पद्मपादचार्यः। संप्रति निश्चलानन्द सरस्वती,१४५ मठाधीशः आसीत्।

**शारदा मठः** शारदा (कालिका) मठ गुजरात द्वारिकायाम् अवस्थितम्। दीक्षा ग्रहणात् अनन्तरं तीर्थ अश्रम वा सांप्रदायनाम्ना परिचिता। 'तत्त्वमसि' शारदामठस्य महावाक्यम्। सामवेदः तत्र वर्तते। हस्तामलक (पृथ्वीधर) प्रथमं मठाधीशः आसीत्। संप्रति स्वामी स्वरुपानन्द सरस्वती, ७९ मठाधीशः वर्तते।

**ज्योतिर्मठः** ज्योतिर्मठः उत्तरांचल बद्रीनाथस्थाने वर्तते। अत्र गिरि, पर्वत एवं सागर संप्रदाय मन्यते। 'अयमात्मा ब्रह्म' इति महावाक्यं मन्यते। अत्र अथर्ववेदं संपादितम्। प्रथममठाधीश त्रोटकाचार्य। अधुना स्वामी वासुदेवानंद सरस्वती, ४४ मठाधीश वर्तते।

**शंकराचार्यः** अद्वैतपरंपराये मठानां स्थापितकृतम्। शंकराचार्य हिन्दुधर्मस्य सवोच्चधर्मगुरु पदस्य उपाधि प्राप्तवान्। अदिगुरु शंकराचार्यः हिन्दुत्वं महानप्रतिनिधिरूपेण जगद्गुरुरूपेण परिचितम्। जगदगुरु आचार्यशंकररूपेण अवतारं पुराणशास्त्रे वर्णितम्। यथा-

कल्यब्दे द्विसहस्त्रान्ते लोकानुग्रहकाम्यया।
चतुर्भिः सह शिष्यैस्तु शंकरोऽवतरिष्यति।।[२]

एतत् व्यतिरेक वैष्णवधर्मप्रचारार्थं रामानुजः, नरहरि तीर्थः, श्रीचैतन्यः प्राधान्यावहति। एमार मठः पुरीक्षेत्रे रामानुजस्य सर्वप्रथमं वैष्णव मठः आसीत्। यत्र यत्र सुप्रसिद्धानि मन्दिराणि सन्ति तत्र तत्र मठानां स्थाप्यनन्तुं दृश्यते एव।

**उत्कलप्रान्तेविविधाः मठाः**

विश्वप्रसिद्धः अस्माकं उत्कलप्रदेशः। अस्मिन् प्रदेशेवहुनि मठमन्दिराणि परिदृश्यते। तेषु जगन्नाथक्षेत्रे त्रिंशत् मठाः दृश्यते, यथा – एमारमठ-त्रिमूर्तिमठ-रघवादास मठ-जगन्नाथ बल्लव मठ-गोवर्धन मठ-राधावल्लव मठ-रामजी मठ-गोस्वामी मठ-वेङ्कटाचारी मठ-सूर्यगोस्वामी मठ-दशावतार मठ- शिवतीर्थ मठ-महीप्रकाश मठ-गोपालतीर्थ मठ-नंदिमाता मठः इत्यादि वर्त्तते। पुरीप्रान्ते ये ये मठाः परिदृश्यन्ते तत्र जगन्नाथःसंस्कृति तथा हिन्दुधर्मस्य प्रचारप्रसारार्थं विभिन्न व्यवस्था प्रचलितं अस्ति। तत्र विभिन्न तीर्थयात्रिणां कृते आश्रयस्थलिरूपेण कार्यं कुर्वन्ति। तत्र दरिद्रजनानां छात्राणां कृते पठनपाठनाय ते शिक्षानिमन्ते आवश्यकीय अर्थं साहार्य्यं कुर्वन्ति। एतादृश्य विभिन्नानुष्ठानिक समाजसेवायाः ते मठाः संयुक्तं प्रदानं कुर्वन्ति।

**मठमाध्यमेन संस्कृतिरक्षा**

भारतवर्षस्य संस्कृतेर्मूलमियं संस्कृतभाषा। साहित्ये मानविकमूल्यबोधस्यचादर्शो परिदृश्यते। महात्मागान्धी अवदत् – संस्कृतं विना भारतीयाः संस्कारविहिना एव। संस्कृतभाषाज्ञानं विना भारतीयसंस्कृतेः ज्ञानं नैव भविष्यति।
अतः कथितम् -

'यावद् भारतवर्षं स्यात् यावद् विन्ध हिमाचलौ ।
यावद् गङ्गा च गोदा च तावदेव हि संस्कृतम्।।'
धर्मस्थापनम् – यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मनं सृजाम्यहम्।।

**गीतायां भगवतः** श्रीकृष्णस्येयमुक्तिश्चरितार्था जगतः कल्याणाय कदाचित् मनस्विनः संभवति, ये कुरितिम्, अधर्मम्, अन्यायं च सम्वलं विनाश्य स्वजातिं राष्ट्रं विश्वं च समुन्नयन्ति। धर्मो विश्वस्य जगतः प्रतिष्ठा। लोके धर्मिष्ठं प्रजा उपसर्पन्ति। धर्मेण पापमपनुदन्ति, धर्म सर्वं विश्ववासिनां जनानामभ्यदयानिः श्रेयससिद्धयर्थं जगति विराजमानस्य धर्मस्य महति प्रतिष्ठा, स्वावयवार्थं प्रतिपादकत्वेऽपि मठानां भारतीयानां प्राणभूतवेदस्य वहुत्र वहुष्वर्थेषु प्रयुक्तः मानवेषु धर्मप्राधान्यमेव तान् अङ्गरूपेण निर्वापितम्।

**समाजसेवाः** मठमाध्यमेन समाजसेवाऽपि भवति। स्वास्थरक्षणं, जनकल्याणं मानवानां हितार्थे मठाः गुरुत्वपूर्णं भूमिकामावहति। रामकृष्ण, पतञ्जलि, रविशंकरादि गुरुणां समाजसेवायाः, देशसेवायाः अवदानं परिदृश्यते।

**साध्यायः** मठमाध्यमेन मानवानां हृदये पवित्रतां सहनशीलतां दयां भाक्तिं प्रमाणं च प्रादुर्भावयति। मठमन्धे प्रतिदीनम् वेदपाठं भवति। तन् माध्यमेन साध्यायः वर्तते। विद्या मानवानां जीवनसहचरी सती तान् सुखयति।

**सांस्कृतिकसद्भावनाः** गुरुः शिष्यस्य कल्याणाय सद्भावनयैवतं नियोजयति। स्वशिष्यान् चारित्र्यसंपन्ननागरिकान् विददसौ राष्ट्रस्य समाजस्य च अभ्युत्थानाय वद्धपरिकरो विभाति। जीवनम् न केवलं भोगार्थमेव, अपित्वात्मोन्नतेः प्रमुख साधनम्। समग्र प्राणिजातं परेशेनैवोत्पादितमिति विचारं तत्रैकत्वमनुभवति। जगदिदं परमात्मना व्यप्तम् ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत् आध्यात्मप्रवुत्या जीवनमुन्नतं भवति। विद्यादानं तु परोपकारस्य श्रेष्ठतमो धर्मः। किञ्चित् मठाः अन्यदानं करोति। प्रत्यक्षतत्त्वावधाने इदं सर्वं कार्य्याणि भवति। शंकराचार्य्यो भौतिकसुखेषु निःस्पृहोऽपरिग्रहो महान् कर्मयोगी चासीत्। सन्यासी सन्नप्यमाजीवनं लोकहितमवेक्ष्य कर्मसमाचरत्। अनेन ब्रह्मसूत्रोपनिषद्गीताप्रभृति ग्रन्थानां भाष्याण्यपि कृतानि। अस्य गूढाध्यात्मतत्त्व प्रकाशकाः प्रबन्धाः ललितमधुरगिरा गुम्फितानि च स्त्रोत्राणि चिरनवीनां कीर्त्ति प्रख्यापयन्ति। केनचित् उक्तम् –

अद्वैतमतसिन्धुनां महापोत इवाऽद्भूतः।
अवतारः शिवस्याऽयं शंकरो लोकशंकरः।।
व्याकुर्वन् व्याससूत्रार्थं श्रुतेरर्थं यथोचिवान्
श्रुतेर्न्यायः स एवार्थः शंकरः सवितानन‌ः।।[३]

पुनः शंकराचार्यविषये कथितम् –

अष्टवर्षेचतुर्वेदी, द्वादशेसर्वशास्त्रवित्
षोडशेकृतवान्भाष्यम्द्वात्रिंशेमुनिरभ्यगात्।।

## उपसंहार

संस्कृतिसंस्कृतयोः यथा सम्बन्धः तथा मठमन्दिरयोः वर्त्तते। संस्कृते वाहकरूपेण उभयोरपि गुरुत्वपूर्ण भूमिका अस्ति। तदर्थं मध्यकालिकामठाः मन्दिरनिकषायः स्थापितम्। महर्षिभिः तेषां अनुचरैःश्च। ते मठाः सर्वदा समाजस्य मङ्गलार्थमेव उदिष्टः। यदि वयं सम्यक् भावेन अवलोकनं कुर्मः र्तहि संस्कृते मूलस्वरूपं द्रष्टुं सक्ष्यमं भवामः।

## पादटिप्पणी

१. कूर्मपुराण १.२७. ३२-३४
२. भविष्योत्तरपुराण ३६
३. शिवपुराण-रुद्रखण्ड-७.१

## सहायकग्रन्थसूची

१. दाहालः आचार्य लोकमणि, संस्कृतसाहित्येतिहासः, कृष्णदास अकादमी, वारणासी, चौखम्बा प्रेस, द्वितीय, वि.सं. २०५६
२. भट्ट पण्डित रामेश्वर, मनुस्मृतिः, चौखम्बा संस्कृत प्रतिष्ठान, दिल्लि, पुनर्मुद्रित संस्करण २०१५
३. भाहादुर राजा राधाकान्तदेव, शब्दकल्पद्रुम कोशः, मोतिलाल बनारसीदास दिल्लि, १९६१ ई., भाग ४
४. प्रहराज, गोपाल चन्द्र, पूर्णचन्द्र उत्कलीयभाषाकोष, भि. कर, दि उत्कल साहित्य प्रेस,कटक, १९३१
५. गोयन्दका जयदयाल, श्रीमद्भगवद्गीता, गीताप्रेस, गोरखपुर, पुनमुद्रण, २००९